1·5

श्रीमन्महाभारतीयम्

# सनत्सुजातीयदर्शनम्

व्याख्याकार :

शिवप्रसाद द्विवेदी ( श्रीधराचार्यः )

श्रीमन्महाभारतीयम्

# सनत्सुजातीयदर्शनम्

( संस्कृतमर्मभेदिन्या हिन्द्यनुवादेन, पुरोवाचा, परिशिष्टैश्च समलंकृतम् )

व्याख्याकार :

**शिवप्रसाद द्विवेदी [ श्रीधराचार्यः ]**

साहित्यवेदान्ताचार्यः, एम० ए०, ( हिन्दी-संस्कृत )

वेदान्तविभागाध्यक्षः, आयोध्यिके श्रीहनुमत्संस्कृतमहाविद्यालये

मुख्यवितरक:

**माडर्नबुकडिपो**

शृङ्गारहाट, अयोध्या ( उ०प्र० )

# समर्पणम्

श्री १००८ श्रीमद्वेदमार्गप्रतिष्ठापनाचार्याणामुभयवेदान्त
प्रवर्तकाचार्याणाम् श्रीमत्परमहंसपरिव्राजकाचार्याणाम्
भगवगाभितप्तजनभागधेय-वैभवभावितावताराणाम्
भूत-वर्तमान—वर्तिष्यमाण—समस्तकुमतिमत-
समूलोन्मूलनसाधिष्ठव्यन्ततत्त्वहितपुमर्थस-
म्प्रदायस्थापकानां निखिलतन्त्रनिष्णा-
तानामस्मत्कुल-दैवतानां जग-
दाचार्य-श्रीमद्भगवद-
नन्तपादीयानाम्

—❀—

श्रीमद्विष्वक्सेनाचार्यत्रिदण्डिस्वामिनाम्

करकमलेषु सादरं; सश्रद्धं; समर्पयति संस्कृते व्याकृत्य
हिन्द्याञ्चानुद्य सनत्सुजातीयदर्शनम्—

श्रीधराचार्यः
( शिवप्रसाद द्विवेदी )
श्यामसदन, कटरा, अयोध्या

# विदुषोऽशुभाशंसने

साहित्यसौहित्यसुधापानाप्यायितान्तरात्मनां समर्जिताध्ययनाध्यापनकर्मव्यतिकरनभोदोधूयमानविजयवैजयन्तीसुयशसां न्यायव्याकरणवेदान्तसाहित्यशास्त्रपारावारपारीणानां प्रणीतहिन्दीसंस्कृतानेकविशिष्टग्रन्थानां सम्पूर्णानन्दसंस्कृतविश्वविद्यालये साहित्यविभागाध्यक्षपदमलङ्कुर्वाणानां प्राच्य-प्रतीच्यविद्याविशारदानाम् आचार्य श्री डॉ कैलासपतित्रिपाठि' महाभागानामाशीर्वचांसि—

संश्रितबहुव्याख्यानं सनत्सुजातीयदर्शनम्, 'अनुज्झितार्थसम्बन्धः प्रबन्धो दुरुदाहरः।' इति सूक्तिमनुहरत्, स्वनिष्ठोक्तिप्रत्युक्तिवैचित्रीं समाश्रयमाणम्, स्वीयामपूर्वां विच्छित्तिमुपोद्वलयत्, नैसर्गिकीं व्याख्यासरणिमुपगच्छद्, विद्यार्थिपरीक्षार्थिसार्थमुपकुर्वाणम्, स्वस्मिन् पाण्डित्यप्रकर्षं निदधानमद्यतनीसु सर्वासु टीकासु स्वातिशयमहिम्ना शेखरायमाणम्, मर्मभेदिनीविलासोल्लासविजृम्भमाणम्, संस्कृतसंस्कारपूतात्मसु गहनाध्ययनप्रवणेषु लोकेषु कीर्तिं भजमानं रागातिशयमश्नुयादिति श्रीशिवप्रसादद्विवेदिमहोदयान् वेदान्तविभागाध्यक्षान् श्रीहनुमत्संस्कृतमहाविद्यालये आयोध्यिके विश्वेश्वरः प्रसादयतु; इति कामयते—

कैलासपति त्रिपाठी

साहित्यविभागाध्यक्षः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणसीस्थे

पदवाक्यप्रमाणपारावारपारीणानां प्राच्यप्रतीच्यदर्शननिष्णाता-नामास्थानविदुषामायोध्यिके हनुमद्दुर्गीये श्रीहनुमत्संस्कृतमहाविद्यालये आचार्यपदमलङ्कुर्वताम् आचार्य श्री प्रभुदासमहोदयानां शुभाशंसनम्—

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयशास्त्रिपरीक्षायाः द्वितीय-वर्षस्य पाठ्यक्रमे निर्धारिते वितर्काकुले सनत्सुजातीयाभिधदर्शने, महाभारतान्तर्गतोद्योगपर्वघटकीभूते, नैकराद्धान्तविप्रतिपन्ने, विद्यार्थिसार्थमुपचिकीर्षन्तः 'क' वर्गीय-प्रथमश्रेणीक-श्रीहनुमत्संस्कृत-महाविद्यालये वेदान्तविभागाध्यक्षपदमलङ्कुर्वाणाः, प्राच्यप्रतीच्य-विद्याविशारदाः श्रीशिवप्रसादद्विवेदिमहोदयाः संस्कृतमर्मभेदिनीं नो गुर्वीं न वा लघ्वीं साधीयसीं टीकां रचयित्वा भूयसीं प्रशंसा-मर्हन्। एतेन परीक्षार्णवपारयिष्णुभ्यश्च्छात्रेभ्यो हितानि च भूयां-स्यकार्षुरिति । किञ्चेमे मर्मभेदिन्या सहैव नैकान् प्रश्नान् समाधुः समालोचनात्मकान् परीक्षोपयोगिनो हिन्द्यनुवादप्रभृति-परिशिष्टत्रिकसहितानिति । प्रतिपिपादयिषितमर्थजातमप्युपापी-दन्निमेनैकधा मर्मभेदिनीटीकामुखेन । अनेन कर्मणा पण्डित-मण्डले छात्रजगति च मर्मभेदिनीटीकापुरस्कारेणेमे यशोऽवाप्नुयु-रिति मे गर्धि मनीषा च ।

प्रभुदासः

—प्राचार्यः

आयोध्यिके, हनुमद्दुर्गीये,

श्रीहनुमत्संस्कृतमहाविद्यालये ।

# विषयानुक्रमः

# पुरोवाक्

यन्मूर्तिध्यानमद्धा जगतिजनिमतां नाशयत्यार्तिजातम् ।
भक्तिं पुष्णाति विष्णौ विषयविषयिणीमाशुमुष्णाति तृष्णाम् ।
सोऽयं पायादपायान्निरवधिकगुणस्तोमविस्तारिकीर्तिः,
श्रीविष्वक्सेनसूरिः सकलसुखकरं दैवतं नः कुलस्य ॥
मह्यं किरन्ति किरणान् वेद्यविश्रान्तभासकान् ।
विष्वक्सेनयतीशांघ्रे रेणवः कामधेनवः

जीवपरमात्मयाथात्म्यज्ञानपूर्वकवर्णाश्रमधर्मेतिकर्तव्यताकपरमपुरुषचरणयुगलध्यानार्चनादिरत्यर्थप्रियन्तत्प्राप्तिफलमिति स्मृतीतिहासपुराणादिभिरुपबृंहणग्रन्थैस्सह कण्ठरवेणापादयन्ति सकलजगद्धितानुशासनपरायणाः साङ्गास्सशिरस्काः वेदाः । सर्वेषां स्मृतीतिहासपुराणानां वेदार्थानामेव विशदीकरणे प्रवृत्तेः वेदार्थनिर्णयार्थमाहुः 'वेदार्थो निश्चेतव्यस्स्मृतीतिहासपुराणैः' 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।' इत्यादिकमभियुक्ताः । तत्रोपबृंहणेषु श्रीमद्रामायणमहाभारते इतिहासकोटावाटीकेते । सपादलक्षश्लोकशरीरके श्रीमन्महाभारते विविधं वैदिकं विज्ञानं विशदं व्याकृतमिति नास्ति तिरोहितं विपश्चिदपश्चिमेभ्यः । तत्रोद्योगपर्वणि द्विचत्वारिंशत्तमादध्यायात्-षट्चत्वारिंशत्तममध्यायं यावत् पञ्चस्वध्यायेषु धृतराष्ट्रं व्याजीकृत्य जननमरणपदवीजङ्घालेभ्यस्संसरद्भ्यो जीवेभ्यः तत्त्वहितपुमर्थानां स्वरूपयाथात्म्यमुपादिशन्महात्मा सनत्सुजातः ।

## सनत्सुजातीये विषयविवेचनम्

प्रजागरपर्वणि विदुरमुखाच्छ्रेयोमार्गानुगामिनीं नीतिम्

'सनत् सुजात: प्रोवाच मृत्युर्नास्तीति भारत' इति वाक्यञ्च श्रुत्वा समागतमाचार्यं सनत्सुजात आसनार्चनादिना सम्मान्य मनीषी धृतराष्ट्रःसप्तविधदुःखसम्भिन्नं सांसारबन्धं प्रगृह्य 'एष आत्माऽप हतपाप्मा विजरोविमृत्युरविशोकोविजघत्सोऽपिपासः सत्यकामस्सत्यसंकल्पः' ( छा० ८।१।१ ) इति श्रुतौ 'भोगमात्रसाम्यलिङ्गाच्च' ( ब्र०सू० ४।४।२१ ) इति सूत्रे चोक्तमाविर्भूतगुणाष्टकस्वरूपं महात्मत्वमधिगन्तुम् 'प्रप्रच्छ बुद्धि परमां बुभूषन्' इत्यनेन परमात्म विषयिणीं 'अथ परा यथा तदक्षरमधिगम्यते' ( मु० १।५ ) इति श्रुतौ प्रोक्तां, परां विद्यामप्राक्षीदिति न्यभान्त्सीद्भगवान् बादरायणः ग्रन्थस्यास्य विषयं निर्दिशन् ।

परां विद्यामधिगम्य मुमुक्षुः—विवेक विमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षाख्यसाधनसप्तकानुगृहीतेन मनसा समाधावस्थाय तैलधारावदविच्छिन्नस्मृतिसन्तानेन स्वपरयोस्स्वरूपं क्रमशो विशदविशदतरविशदतमतयाऽन्ततो यथावदपरोक्षयति विद्यामहिम्ना प्रारब्धेतरकर्मसम्बन्धरहितः । प्रारब्धकर्मफलं भुक्त्वाऽस्मिन्जन्मनि जन्मान्तरे वा शरीरसंबन्धं विहाय—अर्चिरादिपथा "मुक्तो र्चिर्दिनपूर्वपक्ष षडुदङ्मासाब्दवातांशुमद्, ग्लौविद्युद्वरुणेन्द्रधातृमहितः सीमान्तसिन्ध्वाप्लुतः । श्रीवैकुण्ठमुपेत्यनित्यमजडतस्मिन् परब्रह्मणः सायुज्यं समवाप्य नन्दति चिरं तेनैव धन्यः पुमान् ।' इत्यभियुक्तोक्त्यनुसारेण परमात्मनस्सायुज्यं समवाप्य, जगद्व्यापारं विना परमात्मनो भोगमात्रसाम्यं समधिगम्य, आविर्भूत गुणाष्टकस्सज्ञानन्दस्य चरमां काष्ठां चुम्बति । न चात्र 'महात्मा' पदं पूर्ववर्ति दृष्ट्वा 'परमां बुद्धिमि' त्यनेन ब्रह्मात्मैक्यविषयकं ज्ञानमप्राक्षीदिति वाच्यम्; 'महात्मा' पदस्य परमात्मा रूपेऽर्थेऽशक्तत्वात्, अत्र 'माहात्मा' पदस्य, 'सदा पश्यन्ति सूरयः' ( कठो० ३।९।सुबा० ६।१ ) 'पश्यन्ति यत् सूरयः' ( श्रीमद् भा० १।१।१ ) प्रभृतिषु वाक्येषु समागतस्य

नित्य-मुक्त जीवानां पर्यायवाचिनः सूरिशब्दस्यैव समानार्थकत्वात् तावद्दूरपर्यन्तमेव जीवानां महत्त्व स्वीकारात्, जीवानां महात्मस्वरूपे परमात्मत्वस्वीकारे च समकालमेवानेकेषां परमात्मनां सद्भाव प्रसंगात्, परमात्मतत्त्वस्याव्यवस्थानात्, शास्त्रेषुचैकस्यैव परमात्मनः व्यपदेशात्, अस्मिञ्छ्लोके महात्मा पदं = महाबुद्धिरिति व्याकर्तुः भगवत्पादस्य शंकराचार्यस्य भाष्यविरोधाच्च, महात्मा पदं परमात्मपरं भवितुं नार्हति ।

किञ्च ब्रह्मात्मैक्ये ब्रह्मात्मनोः 'रामसुग्रीवयोरैक्यम्' इवात्यन्त विशकलितयोः अपि जीवपरमात्मनोः भोगमात्रसाम्येनैव ब्रह्मसम्पत्तिरिष्टैवास्माकम् । जीवस्य स्वसत्तामनपेक्ष्य ब्रह्मणि लय एव ब्रह्मात्मनोरैक्यमिति चेत्तदपि न तथाविधायैक्याय चेतनस्यप्रवृत्तेरसम्भवात् विद्यामिमामधिगम्य अतैव मे नंक्ष्यतीति ज्ञात्वा ब्रह्मात्मैक्यविज्ञानकथाप्रस्तावगन्धत एवाधिकारी दूरादेवापसर्पेत् । तथात्वञ्चसति विनश्येदिद दर्शनमधिकरणामभावात् । मुमुक्षुस्तु निरस्ताखिलदुःखोऽहमनन्तानन्दभाक्स्वराडुभवेयमिति धियैव श्रवणादौ प्रवर्तते । न च लीनेऽपिजीवे तद्व्यतिरिक्ता तत्संबन्धिनी कश्चिज्ज्ञप्तिरवशिष्यत इति वाच्य; मृतस्यै कस्यचनापि प्रवृत्तेरसंभवात् । अतएव परब्रह्मविषयिणी पराविद्यैवास्य ग्रन्थस्य विषयः, तया च परमात्मसायुज्यमवाप्य भोगमात्रेण परमात्मनः साम्यावाप्तिरेव प्रयोजनम् ।

यतो हि आविर्भूतगुणाष्टकत्वसम्पन्नो जीवो जन्ममरणबन्ध विरहितो भवतीत्याह सनत्सुजातः 'मृत्यु र्नास्तीति ।' संसारस्त्वज्ञानजन्यः । तस्य च निवृत्तिर्ब्रह्मविज्ञानादेव भवति । ब्रह्मविज्ञानञ्च वेदान्तवाक्यैर्विहितेन ध्यानोपासनध्रुवास्मृतिभक्त्यादि शब्दवाच्येन ज्ञानेन भवति । "विज्ञाय प्रज्ञांकुर्वीत' 'अनुविद्यविजानाति ओमित्येवमात्मानं ध्यायथ' 'निचाय्य तं मृत्युमुखात् प्रमुच्यते ।' 'आत्मा-वारेद्रष्टव्यःश्रोतव्यो मन्तव्यो निदिध्यासितव्यः' 'सोऽन्वेष्टव्यः

सविजिज्ञासितव्यः' इत्यादिकाश्श्रुतयः इममेवार्थमाहुः। आसु श्रुतिषु 'अनुविद्य' 'विजानाति' इत्यादिना ध्यानोपकारकं वाक्यार्थज्ञानमनुद्य 'प्रज्ञांकुर्वीत' 'विजानाति' इत्यदिना ध्यानं विधीयते। अगासीदपि भगवान्–'पुरुषः सः परः पार्थ! भक्त्यालभ्यस्त्वनन्यया।' भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुञ्च परंतप!' इत्यादिकम्।

यत्तु–'न तस्य प्राणा उत्क्रामन्ती' त्यादि श्रुतीनामपि उत्क्रमणाश्रयप्राणोपलक्षितसूक्ष्मशरीरेण सह ह्यस्य (विदुषः) स्वस्वामिभावादिलक्षणसम्बन्धनिषेध एव तात्पर्यमिति तदपिससन्दर्भं श्रुत्यर्थपर्यालोचनाभावादेवश्रुते रर्थान्तर सर्जनम्। यतः 'न तस्य प्राणा उत्क्रामन्ती 'त्यत्र तच्छब्देन अत्राकामयमानः' (वृ०४।४।६) इति प्राकृतः शारीर एव परामृश्यते नाश्रुतं शरीरम्। तस्येति षष्ठ्या प्राणानां सम्बन्धित्वेन शारीरो निर्दिष्टः न तूत्क्रान्त्यपादानत्वेन, उत्क्रा न्त्यापादानन्तु शरीरमेवेति चेन्न अपादानापेक्षायामश्रुताच्छरीरात् सम्बन्धितया श्रुतस्यात्मन एव सन्निहितत्वेनापादानतथाऽपि ग्राह्यत्वात्। किञ्च प्राणानां जीवसन्बन्धितयैवप्रज्ञातानां तत्सन्बन्धकथने प्रयोजनाभावात्। सन्वन्धमात्रवाचिन्या षष्ठ्या अपादानमेव विशेष इति निश्चीयते, यथा 'नटस्य श्रणोतीति'। अतएव हि माध्यंदिनानामाम्नाये शारीरो जीव एव अपादानमिति स्पष्टम् —'योऽकामो निष्काम आप्ताकाम आत्मकामो न तस्मात्प्राणा उत्क्रामन्ती'ति। शारीरात्प्राणानामुत्क्रान्ति प्रसंगाभावान्नोपपद्यत उपयुक्तार्थं इति चेन्न–'तस्य तावदेव चिरम्' इति विदुषः शरीरवियोगकाले ब्रह्मसम्पतिवचनेन प्राणानामपि तस्मिन् काले शारीराद् विदुषो वियोगः प्रसज्यते। ततश्च देवयानेन पथा ब्रह्मसम्पत्तिर्नोपपद्यत इति न तस्य प्राणा उत्क्रामन्ति देवयानेन पथा ब्रह्मप्राप्तेः प्राग् जीवाद् विदुषोऽपि प्राणा न

विश्लिष्यन्तीत्युच्यते। स्मर्यते च विदुषोऽपि मूर्द्धन्यनाड्योत्क्रान्तिः- 'उर्ध्वमेकस्थितस्तेषां यो भित्त्वा सूर्यमण्डलम्। ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्।' (याज्ञवल्क्यस्मृतिः ३-१६७) तेषाम् = नाडीविशेषाणामित्यर्थः। मोक्षे जीवानाम्-'अहमात्मा न देहोऽस्मि विष्णुशेषोऽपरिग्रहः। तमेव शरणं प्राप्तः तत्कैकर्यं चिकीर्षया' (वि०पु०) 'सोऽहं त्वां शरणमपारमप्रमेयं संप्राप्तः परमपदं यतो न किञ्चित् (वि०पु० ५।२३।४७) 'सर्वात्मना यः शरणं शरण्य नारायणं लोकगुरुम् प्रपन्नः।' (श्रीमद्भागवत् ११।५।४१) इत्यादिषु वाक्येषु प्रोक्तस्य स्वाभाविकस्य शेषत्वस्य नाशस्वीकारे तु मोक्षे जीवानां स्वरूपमेव नष्टं, स्यात्। इत्थमाविर्भूतगुणाष्टको जीवः स्वरूपभोगादिना ब्रह्मसदृशः सन् नित्यमुक्तरूपेण ब्रह्मलोकेऽपि एतीति प्राह श्रुतिः-ब्रह्मैव सन् ब्रह्माप्येति' इति। तस्यैतस्य मुक्तस्य कृते जन्मजरामरणादिबन्धरूपस्य मृत्योरभावो भवतीति निरवद्यम्।

यत्तु-'सर्वं खल्विदं ब्रह्म' 'नेह नानास्ति किञ्चन' 'एकं सद्-विप्रा बहुधा वदन्ति' 'आनीदवातं स्वधया तदेकम्' इत्यादिभिः श्रुतिभिरेकस्य ब्रह्मण एव वास्तविकी सत्ता प्रतिपाद्यते, तदितर-स्याखिलस्य प्रपञ्चस्य तु तदधिष्ठानिकौपाधिकयेव।' तदप्या पातरमणीयमेव। 'सर्वं खल्विद ब्रह्मे'ति श्रुत्या इदमा सर्वं निर्दि-श्य जगत्तस्य परमात्मकत्वप्रतिपादनात्। 'एकंसदिति' श्रुतिः एकस्यैव ब्रह्मणः तत्त्वज्ञैर्बहुधा व्याख्यानम्-वक्ति। आनीदवातम्' इति श्रुतिस्तु सृष्टेरादौ स्वधया (लक्ष्म्या) विशिष्टस्य ब्रह्मणः स्थितिमापादयति। परञ्चासु कस्याञ्चनापि श्रुतौ ब्रह्मव्यतिरिक्तस्य प्रपञ्चस्य वास्तविकत्व निषेधो नहि अक्षि-लक्ष्यी क्रियते। अथ स्यात्-'अथात आदेशो नेति नेति'ति बहुधा निषेधो दृश्यत इति चेत्त किमत्रनिषिध्यत इति वक्तव्यम्। न चात्र 'द्वे वाव ब्रह्मणो-

रूपे मूर्तञ्चामूर्तमेवचे'ति मूर्तामूर्तात्मकः प्रपञ्चो निषिध्यत इति वाच्यम्, ब्रह्मणो रूपतया अप्रज्ञातं सर्वं रूपतयोपदिश्य पुनस्तदेव निषेद्धुमयुक्तम् । प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायात् । 'नेति नेति' श्रुतेरर्थं तु स्वयमेवाह भगवान् बादरायणः- प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ।' इति सूत्रे । उत्तरत्र 'अथनामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यमिति सत्यादिगुणगणस्य प्रतिपादितत्वात्, पूर्वप्रकृतैतावन्मात्रं न भवति ब्रह्मेति ब्रह्मणस्तावन्मात्रता प्रतिषिध्यत इति सूत्रार्थः ।

नेह नानास्ति किञ्चनेत्यादिना नानात्वप्रतिषेध एव दृश्यत इति चेदत्राप्युत्तरत्र-'सर्वस्य वशी सर्वस्येशान' इति सत्यसंकल्पत्व सर्वेश्वरत्वप्रतिपादनाच्चेतनाचेतनसर्ववस्तुशरीरः परमात्मा इति सर्वप्रकारसंस्थितः सर्वेश्वरः स एक एवेति ।

अतएव 'भोक्ता भोग्यं प्रेरितारञ्च मत्वा' ( श्वे० १।१२ ) क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' ( श्वे०१।१०) 'द्वाविमौ पुरुषौ लोके क्षरः चाक्षर एवच । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।' योलोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । इत्यादिषु श्रौतस्मार्तेषु-वाक्येषु प्रोक्तानां चिदचिदीश्वराणां स्वरूप याथात्म्यज्ञानमेव मृत्यु-निवृत्तेस्साधनमास्ते ।

तत्र चित्, चेतनो, जीवः प्रत्यक्, आत्मा प्रभृतयः शब्दाः साक्षाज्जीवस्य वाचकाः । स च जीवः-देहेन्द्रियमनः प्राणधीभ्योन्योनन्य-साधनः । नित्यो व्यापी प्रतिक्षेत्रम भिन्नो भिन्नश्च-भवति । स च स्वभावत एव परमात्मनः अधेयो, विधेयश्शेषश्च विद्यते । 'एषोऽणुरात्मा चेतसा वेदितव्यः ।' इत्यादिकाः श्रुतयः जीवस्या-णुत्वं प्रतिपादयन्ति । आत्मैव कर्ता भोक्ताचास्ति इत्याह भगवान् बादरायणः-'कर्ता शास्त्रार्थवत्त्वादिति सूत्रे । तस्यैतस्य जीवस्य

कर्तृत्वं परमात्मायत्तमेव भवतीति प्रत्यपीपदत् 'परात्तु तच्छ्रुते' रिति सूत्रे भगवान् पाराशर्यः। त इमे जीवाः बद्धमुक्तनित्य भेदेन त्रिधा त्रिभक्ता भवन्ति। तत्र संसारिणो जीवा बद्धा उच्यन्ते। उच्छिन्नसंसारा जीवा मुक्ता इत्यभिधीयन्ते। कदाप्यनाघ्रातसंसाराः शेषशेषाशनादयो जीवाः नित्यास्सन्ति।

वेदोदितेषु तत्त्वेषु ईश्वर एव प्रधानं तत्त्वमास्ते। स च जड़चेतनात्मकस्याखिलस्य जगतो नियामकः, अखिलहेयप्रत्यनीकः सकलकल्याणगुणसागरः, सर्वेषां मुमुक्षूणाँप्राप्यभूतः, भगवान्, परमात्मा, परब्रह्मेत्यादिशब्दवाच्यः, जगन्मूलम् -जगदाधारः, जगदात्मा च वर्तते इति क्षरात्मानीवोशतं देव एकः, 'निर्गुणं निर्विकार' 'कारणं तु ध्येयम्' 'यः सर्वज्ञः सर्ववित्' 'परास्यशक्ति र्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' 'ऐतदात्म्यमिदं सर्वम्' इत्यादिकाः श्रुतयः प्रतिपादयन्ति। ,सदेवसोम्येदमग्र आसीदेकमेवाद्वितीयम्, श्रुतिः अस्यैव जगतोऽभिन्ननिमित्तोपादानतां प्रतिपादयति। इममेव निचाय्य संसारिणो जीवाः मृत्युमुखात् प्रमुच्यन्ते। इममेवं नित्या मुक्ताश्च जीवाः सदाऽपरोक्षयन्ति। परमात्मेव वेदाविश्रान्तम् तत्त्वम्।

वैदिकेषु वास्तविकेषु तत्त्वेषु अचित् तृतीयं तत्त्वम्। इदमेव श्वे०१।९ श्रुतिः भोग्यमित्यभिधत्ते। ज्ञानशून्यत्वे सतिविकारास्पदत्वमचित्सामान्यलक्षणम्। तच्च-शुद्धसत्त्वम्, मिश्रसत्त्वम् सत्त्वशून्यञ्चेति त्रेधा विभज्यते। शुद्धसत्त्वमेव 'त्रिपादस्यामृतं दिवि' इत्यादिषु नित्यविभूतिः, वैकुण्ठम्, इत्यादिभिश्शब्दैरभिधीयते। तत् उपर्यपरिच्छिन्नमधस्ताल्लीलाविभूत्या परिच्छिन्नञ्चास्ते। मिश्रसत्त्वमेव चतुर्विंशति तत्वात्मिका प्रकृतिः। तदिदं सत्त्वरजस्तमोगुणयुक्तम् बद्धानां ज्ञानानन्दयोस्तिरोधायकं विपरीतज्ञान-

जनकं नित्यं परमात्मनः क्रीडापरिकरभुतं देशभेदेन कालभेदेन च सदृशविसदृशानाँ विकारणांजनकमास्ते । सत्त्वशून्य तु सर्वेषां जन्यानां जनकः कालएवाभिधीयते । इमानि त्रीण्येव तत्त्वानि वैदिकानि वास्तविकानि च । एतेषाँ स्वरूपं संबन्धादिकं च ज्ञात्वा जीवः मृत्युमुखत् प्रमुच्यते भवतिचतस्मै संसाराख्यस्य मृत्योरभावः ।

तस्यैतस्य सनत्सुजातीयदर्शनस्य अत्र संगृहीतेषु चतुर्ष्वध्या-येषूपयुक्तस्यैव तत्त्वत्रयस्य व्याख्यानमतिमनोज्ञेन पथाकृतमास्ते । तेषां चतुर्णामध्यायानांमध्यायक्रमेण सारांश प्रस्तूयते-

## प्रथमाध्यायस्य सारांशः—

धृतराष्ट्रः समागतमाचार्यं सनत्सुजातं सम्मान्य अर्घ्यपादा-दिनाऽप्राक्षीत् मृत्योरहस्यविषये आचार्य ! 'मृत्युर्नास्तीति तव प्रवादः ।' उपनिषत्सु श्रूयते यत्–देवासुराः मृत्योः प्रहाणाय ब्रह्मच-र्यमचरन् इति, कस्मात् परस्परं विरुद्धा वार्ता श्रूयत इति । धृत-राष्ट्रस्य मोहमपाकर्तुम् 'प्रमादं वै मृत्युमहं ब्रवीमि, तथाऽप्रमाद ममृतत्वं ब्रवीमित्यवोचन्महात्मा सनत्सुजातः । प्रमादो हि देहेन्द्रि-मनः प्राणज्ञानेष्वनात्मस्वात्मबुद्धिरूपः । श्रवणमननिदिध्यासन पुरस्सरं वैदिकानां तत्त्वानां स्वरूपसंबन्धादिकस्य याथात्म्यम परोक्ष्य साधनसप्तकानुगृहीतेन मनसा आवृत्तिरसकृदुपदेशादित्युक्त-नयेन आविद्याप्राप्तिं परमात्मोपासनमेवाप्रमादः । लोके मृत्यो-र्विषये प्रमादप्राचूर्यं वर्तते । केचन यममेव मृत्युमाहुः । अनात्मज्ञा जनाः ऐहिकामुष्मिकफलभोगलिप्सया काम्यानि कर्माण्याचरन्तः मृत्योश्चक्रमनुवर्तन्ते । रूपरसगन्धपर्शशब्दाख्यानां विषयाणां मरणमेव मृत्यवे भवति । कामीपुरुषः प्राग्विषयान् स्मरति ततो विषयाभि-लाषरूपः कामोजायते । कामस्य विघाते क्रोधोभिवर्धते । ततो निषिद्धमाचरन् = जीवः मृत्यमाप्नोति भूरिशः । इत्थं संसारबन्ध-रूपस्य मृत्योर्द्वारं विषयस्मरणमेवेति ज्ञात्वा ज्ञानिनः विषयविषस्य

विस्मरणमेव कुर्वन्ति। ततो धृतराष्ट्र आप्राक्षीत् यद्येवम् तर्हि विहितकर्मणामनुष्ठानमेव मोक्षाय भवतीति शास्त्रेषु कथं प्रोक्तम् ? सृष्टिः कस्मै प्रयोजनाय केन क्रियते ? जीवः संसार बन्धे कस्मादापततीति। जीवपरमात्मनोः कीदृशो भेदश्चवर्तते। धृतराष्ट्रस्य प्रश्नानुदत्तरन् सनत्सुजातोऽवादीद्यत् जीव परमात्मनोः यद्यपि चेतनत्वादिक समानरूपेणास्ते तथापि परमात्मा जीवानां नियामको धारकः शेषीच भवति। अतएव आह भगवान् बादरायणः 'अधिकं तु भेदर्दिशादिति। जगतोऽभिन्ननिमित्तोऽपादानकारणभूतः परमात्मा केवलं स्वलीलायै जगत् करोति विकरोति च। आहापि पाराशर्यः-'लोकवत्तु लीलाकैवल्यात्।' इति सूत्रे। प्राप्यस्य परमात्मनः प्रियत्वाय कृत कर्म संसारबन्धाय नहि जायते, किन्तु लौकिकपारलौकिकानां फलानामवाप्तये कृतन्तदेव संसारबन्धाय भवति। पुनः पुण्यपापयोर्विषयेऽवादीत्सनत्सुजातो यत् पुण्यपापे क्रमशः सुखदुखादर्केभवतः। परमात्मप्रीत्यै कृतं कर्म पापं बाधते। तदनन्तरं सनत्सुजातः मुमुक्षोः चर्यामुपादिशत्। सततं परमात्मोपासनपरायणः संसाराद्विरतः, शरीरयात्रायै सविवेकं भैक्षमाचरन्, कुत्रापि-स्वचर्यामप्रकाशयन्, मानापमानयोस्समानं तिष्ठन्; विद्यावाप्तिं यावत् काम्यनिषिद्धवर्जनपुरस्सरं विहितं कर्मानुतिष्ठन् मोक्षाधिगमस्य प्रतिबन्धिकां मत्वा लौकिकीं समृद्धिं, दूरेण तां परिहरन् मोहप्रतिबन्धनानां सत्यार्जवह्रीदमशौचविद्यानां पालनं कुर्वन् मुमुक्षुः पुरुषः प्रारब्धकर्मणा यात्रल्लोकयात्रां करोतीति प्राह आचार्यः सनत्सुजातः।

## द्वितीयाध्यायस्य सारांशः—

स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदस्य स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजः प्रभृतिसकलकल्याण गुणमहार्णवस्य परस्य पुंसः विवेकादिसाधनसंस्कृतान्तःकरणवता पुरुषेण आगमानुमानयोगजप्रत्यक्षैः स्वेतरसकलविलक्षणस्वभावतया विशदविशदतरविशदतमतयाऽन्तर्नीययावदपरोक्षीकरणमेव मुनेर्वर्गः तत्र [illegible] तदेव मौनमित्यभिधीयते। इदमेव मौनममृत्यवे भवति। मौनत्वावाप्तिं

यावत्सर्वाणि विहितानि कर्माणि अनुष्ठेयानि भवन्ति । वेदानामध्ययनम्, सर्वाणि च तपांसि एतस्य साधकान्येव सन्ति नतु बाधकानि । सर्वे वेदाः तस्यैव परमस्य पुंसः परितोषाय तानि-तानि कर्माण्युपदिशन्ति । क्रोधादिद्वादशदोषरहितैः, धर्मादिद्वादश व्रतसहितैश्च दमत्यागाप्रमादैस्समलंकृतो मुमुक्षुः सर्वान्तर्यामिणं, सर्वेषामात्मभूत पुरुषमुपास्ते मौनमवलम्ब्य परमात्मानम् ।

## तृतीयाध्यायस्य सारांशः—

वात्सल्यादभयप्रदानसमयादार्तार्तिनिर्वापणादौदार्यादघशोषणादगणितश्रेयः पदप्रापणात् सेव्यस्य श्रीपतेः प्राप्ते रन्तरङ्गसाधनस्य ब्रह्मचर्यस्य स्वरूपम्, तस्य चतुरः पादान्, फलानि चोपवर्णितानि तृतीयेऽध्याये । 'आभातिशुक्लमित्यादिना ब्रह्मणो विश्वरूप वैरूप्यमाह । 'अपारणो यमित्यादिना ' अपारणीयस्त्वं महतांमहीयस्त्वञ्चाह समकालमेव परस्मिन् ब्रह्मणि । 'साप्रतिष्ठे' त्यादिना ब्रह्मणो जगदुपादानत्वमापादितम ।

## चतुर्थाध्यायस्य सारांशः—

अस्मिन्नध्याये वेदान्त वेद्यस्य परस्य ब्रह्मणः स्वरूपनिरूपणं कृतम् । 'शुक्राद ब्रह्म प्रभवती' त्यादिना जगत्कारणत्वं जगन्नियामकत्वञ्चोक्तं परमात्मनः । 'अपोथ' इत्यादिना भूतानां प्रभवोनियामकश्च परमात्मैवास्ति इत्युक्तम् । 'चक्रे रथस्य' इत्यादिना श्रेयोमार्गानुगामी भगवन्तमुपास्ते इत्याह । 'न संदृशेतिष्ठतीत्या' दिना इन्द्रियागोचरोऽपि परमात्मा भक्तानां साक्षात्कारविषयो भवतीति प्राह । अनात्मज्ञा जीवाः समारसागरे निमज्जन्ति अनादिकालत इति उक्तम् 'द्वादशपूगाम्' इत्यादिना जीवः कृतस्य कर्मणो फल सुखदुःखादि रूपम् भुक्त्वा तेषु-तेषु लोकेषु, वासनाशेष आयाति मर्त्य लोकमित्यगादित् । सर्वेषां हृदि परमात्मान्तर्यामीरूपेणविराजते इति हिरण्यवर्णमित्यादिना उक्तम् । सर्वव्यापकः परमात्मा सर्वत्र पूर्ण एव भवतीति पूर्णादित्यादिना उक्तम् । सर्वाणि तत्त्वानि विपरीक्रमेण परमात्मनि विलयनं कृत्वा परमात्मानमेव पश्यन्ति योगिनः समधिगतविद्यस्य मुमुक्षोः तावत्कालमेव मोक्षे बिलम्बमास्ते याव

त्कालं प्रारब्धं न क्षीयते । मुक्तस्य पुरुषस्य कृत्याकरणमपि पूर्यते । सर्वव्यापी परमात्मा मनोवेगवद्भ्योऽप्यग्रे गच्छतीति प्राह-'यः सहस्रमि' त्यादिना । कृतकृत्यो समधिगतनिश्चयः पुरुषः कुत्रापि नहि विभेति । सर्वदैव परमात्मानमेव ध्यायति ब्रह्मज्ञः पुरुषः । सर्वत्रैव परमात्म त्मकत्वं पश्यति सः । देहपाते संजाते परमात्मनः सायुज्यमवाप्नोति तेनैव साकं च सर्वान् कामान् समश्नुते मुक्तः ।

## सनत्सुजातीयदर्शनस्य प्रकाशनानि

साम्प्रतम् सनत्सुजातीयदर्शनस्य त्रीणि संस्करणानि समुपलभ्यन्ते । तानि च –(१) गीताप्रेसस्य शांकरभाष्य-समन्वितम् संस्करणम्, (२) अयोध्यातः प्रकाशितम् श्री पं० बैजनाथद्विवेदिमहोदयानां संस्कृतव्याख्यासमलंकृतं संस्करणम् (३) दारागंजप्रयागतः प्रकाशितम् हिन्दीव्याख्यासमन्वितं संस्करणञ्चेति सन्ति । एतेषु त्रिषु संस्करणेषु मूलस्य समानता वर्तते । वास्तविकता चास्ति यत् गीताप्रेसस्य संस्करणमेवावेक्ष्य श्रीद्विवेदिमहाभागाः संस्कृतव्याख्यामकार्षुः सनत्सुजातीयदर्शनस्य । प्रयागतः प्रकाशितस्य संस्करणस्य आधारश्चास्ते द्विवेदिमहाभागानां संस्करणम् ।

## मूलसनत्सुजातीयदर्शनस्योपेक्षा

गीताप्रेसस्य संस्करणस्यादौ भूमिकायाम् श्रीसनातनदेवमहानुभावाः लिखन्ति यत् प्राचीनेषु सनत्सुजातीयदर्शनस्य संस्करणेषु श्रीरङ्गमस्य वाणीविलासमुद्रणालयतः प्रकाशितमेव संस्करणम् मूलपाठस्य दृष्ट्या शुद्धतममास्ते । अतः तदेव संस्करणम् गीताप्रेससंस्करणस्य मूलमभूत् इति ।

परञ्चेदमत्रावधेयमास्ते यत् श्रीमहाभारतस्य उद्योगपर्वणः द्विचत्वारिंशत्तमादध्यायादारभ्य षट्चत्वारिंशत्तममध्यायं यावत् पञ्च अध्याया एव सनत्सुजातीयदर्शनमित्यभिधीयन्ते । १९३१ ईस्व्याम् पूनातः श्रीनीलकण्ठाचार्यस्य भावदीपाख्यया व्याख्यया सह समग्रस्य महाभारतस्य श्रीरामचन्द्रकिञ्जडबाडकर महोदयानां सम्पादकत्वे प्रकाशनमभूत् ।

श्रीनीलकण्ठाचार्या भावदीपे मूलस्थस्य पाठभेदस्य निर्देशमप्यकार्षुरत्र यत्र । श्रीनीलकण्ठस्य भावदीपाख्यव्याख्यानुसारात् सनत्

सुजातीयदर्शन पाटात् नितरां भिद्यते उपर्युक्तानाम् चतुर्णां संस्करणानांमूलपाठाः। एतदेव नाहं नीलकण्ठाचार्यानुसारेण सनत्सुजातीयदर्शनस्य उद्योगपर्वणः द्विचत्वारिंशत्तमेऽध्याये ४६-श्लोकाः त्रिचत्वारिंशत्तमेऽध्याये६३ श्लोकाः चतुश्चत्वारिंशतमेऽध्याये३१ श्लोकाः पञ्चचत्वारिंशत्तमेऽध्याये२१ श्लोकाः षट्चत्वारिंशत् तमेचाध्याये ३१श्लोकाश्चः सन्ति। परञ्च श्रीसनातनदेवमहाभागानाम् श्रीद्विवेदिमहाभागानाम् श्रीब्रह्माश्रममहाभागानामनुसारेणच सनत्सुजातीयेदर्शने चत्वार एवाध्यायाः सन्ति। श्रीसनातनदेव महाभागा अलेखिषुर्यत् श्रीभगवत्पादानम् शंकराचार्याणाम् व्याख्यैवनास्ति सनत्सुजातीय दर्शनस्य पञ्चचत्वारिंशतमस्याध्यायस्योपरि। परञ्चेदं तथ्यं भवितुंनार्हति। अर्वाचीनतमस्य श्रीरामचरितमानसस्य इदानीम् मूल–प्रतिः नोपलभ्यते तेन वक्तुंशक्यते किम् यत् गोस्वामिपादा रामचरितमानसस्य प्रणयनमेव नह्यकार्षुः? भगवन्तः शंकराचार्याः वेदानां तदुपबृंहणग्रन्थानां च संरक्षकेषु अग्रेसरा आसन्। ते पञ्चचत्वारिंशत् तमस्याध्यायस्व्याख्यामवश्यमकार्षुः परञ्च संरक्षकाणां प्रमादात्, वैदिकसम्पत्ति प्रणाशने बद्धपरिकराणां वा कुत्सिततमप्रयाससाफल्यात, ते ग्रन्थाः नष्टः इति मे द्रढीयान् विस्रम्भः। उपर्युक्तेषु दिषु समेषु संस्करणेषु द्विचत्वारिंशत्तमेऽध्याये ४३श्लोका, त्रिचत्वारिंशततमे ५१ श्लोकाः चतुश्चत्वारिंशत्तमे २४श्लोकाः षट्चत्वारिंशत्तमे च अध्याये ३१श्लोका सन्ति।

अस्मिन् संस्करणे १९३१ ईस्व्याम् पुनातः पं० रामचन्द्रकिञ्जवाडकर महोदयानाम् सम्पादकत्वे श्रीनीलकण्ठाचार्यस्य व्याख्यया सह प्रकाशितान्महाभारतादेव मूलपाठः स्वीकृतोऽस्ति। श्रीनीलकण्ठाचार्यैर्व्याख्यातानां समेषां श्लोकानां 'मर्मभेदिनी' च कृता वर्तते। अस्य ग्रन्थस्य व्याख्यालेखने अस्मन्महाविद्यालयस्यप्राचार्यैः 'श्रीप्रभुदासमहोदयैः' बहुधा साहाय्यमाचरितमिति तेषामुपकारभरं शिरोभिर्वहामि।

नूनं अस्य ग्रन्थस्य मुद्रणे प्रूफसंशोधनादौ तत्र-तत्र प्रमादो जातः। सुधियः संशोधयित्वा ताम् मां सभाजयिष्यन्ति स्वनिरवग्रहया करुणयेति प्रार्थयते विपश्चिदपश्चिमानां—

वशंवदः

श्यामसदन, कटरा, अयोध्या

शिवप्रसाद द्विवेदी

# श्रीसनत्सुजातीयदर्शनम्

## द्विचत्वरिंशोऽध्यायः

### ( प्रथमोऽध्यायः )

भासा यस्य विभाति विश्वमखिलं ध्यायन्ति यं योगिनः ।
कार्यं यस्य समस्तविश्वमनिशं पश्यन्ति यं सूरयः ।
सोऽयं सर्वनियामकः प्रभुवरो वेदान्तवेद्यो विभुः ।
पायच्छ्रीपतिरेव नः प्रणमतः नारायणस्सर्वदा ॥

विशिष्टाद्वैतराद्धान्तनिर्धारणधुरंधराः
भवन्तु भूत्यै नित्यंनो विष्वक्सेनयतीश्वराः ॥
सनत्सुजातसम्प्रोक्तं सर्ववेदान्तसम्मतम् ॥
छात्राणां सुखबोधाय तत्त्वं व्यक्तमुदञ्चये ॥

राज्ञा धृतराष्ट्रेण मृत्योरहस्यविषये पृष्टो महात्मा विदुरोऽवादीत्—ज्ञात्वाऽपि विषयामिमं शूद्रयोनौ जातत्वात् वक्तुं नास्मि समर्थः । यतः सत्सन्तानप्रसूतेन सदाचारनिष्ठवेदविदाऽचार्येणैव समधिगता विद्याऽऽत्मकल्याणाय कल्पते । अतएव महर्षिः सनत्सुजात एव विद्यामिमां त्वाम् वक्ष्यति । इत्युक्त्वा विदुरः सनत्सुजातमहर्षिणो ध्यानं चकार । विदुरकृतध्यानसमनन्तरमेव महर्षिः सनत्सुजातो धृतराष्ट्रस्य समक्षे प्रकटो बभूव । ततः–

मू०—वैशम्पायन उवाच–

ततोराजा धृतराष्ट्रो मनीषी सम्पूज्य वाक्यं विदुरेरितं तत् ।
सनत्सुजातं रहिते महात्मा पप्रच्छ बुद्धिं परमां बुभूषन् ॥१॥

मर्मभेदिनी—वैशम्पायनः अवोचत्—ततः विदुरेण समागतोऽयं महर्षिः सनत्सुजातः सर्वं त्वदभिमतं वक्ष्यतीत्युक्ते सति, मनीषी –

प्राज्ञः 'बुद्धिर्मनीषाधीषणाधीः प्रज्ञाशेमुषोमतिरित्यमरः । राजा- धृतराष्ट्रः, विदुरेरितम् = विदुरेणोक्तम् तत् 'सनत्सुजातः प्रोवाच मृत्युर्नास्तीति भारत' इति वाक्यम् सम्पूज्य - सम्मान्य, महात्मा बुभूषन् = भवितुमिच्छन्, रहिते = एकान्ते; सनत्सुजातं परमां बुद्धिं = 'अथ परा यया तदक्षरमधिगम्यते ।' ( मु० १।५ ) इति श्रुत्युक्तां ब्रह्मविद्यां, पप्रच्छ = अप्राक्षीत् ।

अनुवाद—वैशम्पायनने ( जन्मेजय से ) कहा—इसके पश्चात् प्राज्ञ राजा धृतराष्ट्र ने विदुर की बातों का समादर कर महात्मा होने की इच्छा से एकान्त में सनत्सुजात से ब्रह्मविद्या के सम्बन्ध में पूछा ।

मू०—धृतराष्ट्र उवाच—

सनत्सुजात यदिदं शृणोमि न मृत्युरस्तीति तव प्रवादम् ।
देवासुरा ह्याचरन् ब्रह्मचर्यममृत्यवे तत्कतरन्नु सत्यम् ॥२॥

मर्मभेदिनी—धृतराष्ट्रोऽवादीत्–हे सनत्सुजात सनत्–सर्वदा सुष्ठु जातं जन्म यस्य तत् सम्बुद्धौ सर्वदा कुमारत्वात् जरामरण रहितत्वात् इत्यर्थः इदम् यत् तव = भवतः, प्रवादम् = प्रवचनं, शृणोमि यत् 'मृत्युर्नास्तीति = लोके मृत्युनामकः कश्चन पदार्थो नास्तीति किञ्च–अमृत्यवे = मोक्षमधिगन्तुम्, देवासुराः = देवाश्चा- सुराश्च, ब्रह्मचर्यं ह्याचरन् ब्रह्मचर्यस्याचरणमकार्षुः । श्रूयते हि- छान्दोग्योपनिषदः अष्टमाध्याये–यत् देवेष्विन्द्रःअसुरेषु विरोचनश्च 'एष आत्माऽपहतपाप्मा विजरो विमृत्यु विजिघत्सोऽपिपासः सत्य- कामः सत्यसंकल्पः । तद्विजिज्ञासस्व' (छ.उ.८।६।१)इत्याकाशवाणीं श्रुत्वा प्रवव्रजतुः, गत्वा च ब्रह्मणस्सविधे वर्षाणामेकशतं ब्रह्मचर्यस्य पालनञ्चक्रतुः । नु इति वितर्के । तदेतत् ... सत्यम् ...

द्वयोर्मतयोर्मध्ये कतरत् मतम् सत्यम् अस्ति । अयमाशय:-मृत्योर सर्वथा अभाव एव वर्तते अथवा कृतेन कर्मणा मृत्योरभावो जायते ? इति प्रष्टुराशयः ।

अनु०—धृतराष्ट्र ने कहा—मैं आपका यह विचार सुनता हूं कि मृत्यु नहीं है, ( तथा यह भी सुनता हूँ कि ) दैत्यों तथा देवों ने मृत्यु का विनाश करने के लिये ब्रह्मचर्य का पालन किया। इन दोनों में से कौन सा मत सत्य है ?

अत्र सनत्सुजातः समाधत्ते-

मू०—सनत्सुजात उवाच—

मू०—अपृच्छः कर्मणा यच्च मृत्युर्नास्तीति चापरम् ।
श्रृणु मे ब्रुवतो राजन् यथैतन्मा विशंकिथाः ॥३॥

मर्मभेदिनी—हे राजन्=धृतराष्ट्र, यत्त्वम् कर्मणा ब्रह्मचर्यादिपालनरूपेण मृत्युर्नास्तीति संसारबन्धनस्य विनाशो जायते इति च=किञ्च अपरम्=मृत्युस्स्वरूपत एव नस्तीति उभयोर्मतयो कस्य मतस्य सत्यवत्वमास्ते ? अपृच्छः= पृष्टवान् यथैतत्= यथा एतत् वर्तते तथा ब्रुवतः=कथयतो मे=मम वचांसीति शेषः, श्रृणु=श्रवणं कुरु माविशंकिथाः=शंकां मा कार्षीः ।

अनु०—धृतराष्ट्र ! तुमने जो पूछा है कि ब्रह्मचर्य आदि के पालन द्वारा संसार के बन्धनरूपी मृत्यु का विनाश होता है ? स्वरूपतः मृत्यु है ही नहीं; इन दोनों में से कौन सा मत सत्य है ? तो इसके विषय में मैं तुम्हें बतलाता हूं, सुनो ।

तत्रोभयोर्मतयोरभेदमाह—

मू०—उभे सत्ये क्षत्रियैतस्य विद्धि मोहान्मृत्युः संमतोऽयं कवीनाम् ।
(१६७६)प्रमादं वै मृत्युमहं ब्रवीमि तथाऽप्रमादममतत्वं ब्रवीमि



मर्मभेदिनी—हे क्षत्रिय=धृतराष्ट्र ! एतस्य=जीवस्य

अवस्थाभेदात्, उभे अपि मते सत्ये एवेति विद्धि = अवेहि। जीवानां बन्धावस्थायां ब्रह्मचर्यादिपालनपुरस्सरं समधिगतायां विद्यायां अग्नौ प्रोतमीषिकातूलमिव सर्वेषां कर्मणां विनाशात् संसारबन्धस्य विनाशो भवति, नित्यमुक्तादिजीवानां च सर्वदाऽविर्भूतगुणाष्टकत्वात् संसारबन्धरूपो मृत्युर्नास्त्येवेति भावः। अतएवोभयोर्मतयोः विरोधो नास्ति। स्वरूपज्ञानतिरोधानरूपात् मोहादेव मृत्युः = संसारो भवतीत्येव पक्षः कवीनाम् = ब्रह्मज्ञानिनां सम्मतः = अभिमतः अहंवै = सनत्सुजातस्तु आत्मतत्त्वानवेक्षणरूपं प्रमादमेव मृत्युं 'सदापश्यन्तिसूरयः' ( सु० उ० ६।१ + कठो० ३ + ९ ) इत्युक्तिरित्या सततं स्व-स्वरूपादीनां स्वरूपयाथात्म्यस्यापरोक्षकरणरूपमप्रमादमेवामृतत्वं = मुक्तिं वच्मि = कथयामीत्यर्थः।

अनुवादः—धृतराष्ट्र ! उपर्युक्त दोनों मतों को सत्य समझो। ( क्योंकि बद्धावस्था में ब्रह्मचर्यादि पालन पूर्वक समधिगत परा) विद्या के द्वारा जीव के सभी कर्मों का नाश हो जाने से संसार के बन्धन रूपी मृत्यु का नाश हो जाता है, तथा नित्य मुक्त जीवों के सर्वदा आविर्भूतगुणाष्टक होने के कारण उनके लिए संसार का बन्धन होता ही नहीं है।) स्वस्वरूपज्ञान के तिरोधान रूप मोह से ही संसार होता है, यह ब्रह्मज्ञानियों का कथन है। मैं तो आत्मस्वरूप के अनवेक्षणरूप प्रमाद को ही मृत्यु तथा स्वस्वरूपसाक्षात्कार को मोक्ष मानता हूं।

अथ आत्मतत्त्वानवेक्षणरूपात्प्रमादादेवासुराः पराभूताः अभूवन् 'आवृत्तिरसकृदुपदेशात्' ( ब्र० सू० ४।१।१ ) इत्युक्तदिशा आविद्याप्राप्ति तैलधारावदविच्छिन्नस्मृतिसन्तानरूपेण निदिध्यासनेन 'भोगमात्रसाम्यलिङ्गाच्च' ( ब्र० सू० ४।४।२१ ) इति सूत्रानुसारेण एव आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोविजिघत्सोऽपिपासः

सत्यकामः सत्यसंकल्पः' ( छा० ८।६।१ ) इति श्रौतं ब्राह्मभावमश्नुवन्तीति निदर्शनमुखेनान्वयव्यतिरेकाभ्यां प्राह-

प्रमादाद्वै असुराः पराभवन्नप्रमादाद् वै ब्रह्मभूता भवन्ति ।
नैव मृत्युर्व्याघ्र इवात्ति जन्तून् न ह्यस्यरूपमुपलभ्यते हि ।।५।।

मर्मभेदिनी— प्रमादाद्वै = आत्मस्वरूपाज्ञानादेव असुराः = देहेन्द्रियमनःप्राणादिषु रममाणाः पराभवन् = कामक्रोधाद्यासुरवृत्तिभिराक्रान्ताः सन्तः पराभूताः अभूवन् तथा अप्रमादात् = , वामदेवादयः 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' ( तै०-आ०१।२ ) ब्रह्मभूता अविभू'त गुणाष्टकाः सन्तो ब्रह्मभावं गताः । मृत्युः = अज्ञानं जन्तून् = जीवान्, अत्ति = संसारसंकटे पातयति न तु व्याघ्रइव अस्य मृत्योः रूपादिकमुपलभ्यते; केवलं कार्याण्येव दृष्ट्वा तस्य अनुमानं क्रियते ।

अनु०—प्रमाद के ही कारण असुर पराभूत हो गये तथा ज्ञानी जीव मोक्ष प्राप्त कर लिए । अज्ञान जीवों को संसार संकट में डाल देता है, किन्तु इसके रूपादि का साक्षात्कार नहीं होता ।

इदानीं मृत्युविषये लोकप्रवादमाह-

मू० 'यमंत्वेके मृत्युमतोऽन्यमाहुरात्मावासममृतं ब्रह्मचर्यम्
पितृलोके राज्यमनुशास्ति देवः शिवःशिवानामशिवोऽशिवानाम्।।६

मर्मभेदिनी—'एके तु = एकप्रकारकाः मृत्योस्स्वरूपानभिज्ञाः जनाः अतः = आत्मस्वरूपानवेक्षणरूपादज्ञानात्, अन्यम् = भिन्नम् आत्मावासम् = आत्मन्यवस्थितम्, ब्रह्मचर्यम् = ब्रह्मणिचर्या यस्य तम् अमृतम् = जरामरणादिरहितम्, यमं = यमसंज्ञकं, मृत्युमाहुः । स एव यमा देवः = दिव्यगुणसंपन्नः, शिवानाम् = फलाभिसंधि विहाय स्ववर्णाश्रमानुगुणानि कर्माणि कुर्वाणानाम्, जनानाम् कृते शिवः = कल्याणकारी, अशिवानाम् = निषिद्धाचरणं कुर्वाणानां कृते अशिवः =

दुखदः पितृलोके राज्यमनुशस्ति = प्रशासनं करोति' । इत्याहुः ।

एक प्रकार के अज्ञानी जीव अज्ञान से भिन्न, आत्माश्रित, ब्रह्मचर्यनिष्ठ, अमृत यमराज को ही मृत्यु कहते हैं। वे ही दिव्यगुण सम्पन्न ( यमराज ) पुण्यात्माओं के लिये कल्याणकारी तथा पापियों के लिए अकल्याणकारी हैं।

क्रोध–प्रमाद–लोभरूपाः मृत्युदूताः यमदेवता एवेति वक्ति–

मू०अस्यादेशान्निःसरते नराणां क्रोधः प्रमादो लोभरूपश्चमृत्युः
अहंगतेनैवचरन्विमार्गान्नचात्मनो योगमुपैति कश्चित् ॥७॥

मर्मभेदिनी–अस्य = यमस्य, आदेशात् = आज्ञाया एव नराणाम् = जीवानाम् क्रोधः प्रमादो लोभश्च मृत्युः मरणहेतुः निः सरते = उद्भवति। यथाज्ञानाभिमानिनी देवता यमः तथैव क्रोधादीनामप्यभिमानिन्यो देवताः यमस्य दासभुता एव । 'त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः। कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत् । ( गीता १६।२१ ) इत्युक्तदिशा आत्मनाशकत्वात् कामादीनाम् मृत्युरूपता सुतरां सिद्धा। अहंगतेनैव = अहंकारसाहित्येनैव विमार्गान्, चरन् = विषयोपभोगासक्तस्सन् कश्चित् कुमार्गगामी जीवः, आत्मनो योगम् स्वं रूपम्, न उपैति = नहि प्रतिपद्यते । 'आस्यादेष' इति पाठे तु आस्तेऽस्मिन्नित्यास्यम् क्रोधादीनामधिष्ठानभूतोहंकारः तस्माद् एषः क्रोधादिरूप इत्यर्थः।

अनुवादः––इस यमराज के आदेश से ही जीवों की मृत्यु रूपी क्रोध, प्रमाद तथा लोभ की उत्पत्ति होती है। कुमार्गगामी अहंकारी जीव स्वाभाविक आविर्भूतगुणाष्टकतारूप स्वस्वरूप को नहीं प्राप्त करता है।



स्वस्वरूपावाप्तेरभावे दोषानाह–

मू०—ते मोहितास्तद्वशेवर्तमाना इतः प्रेतास्तत्र पुनः पतन्ति।
ततस्तान् देवा अनुविप्लवन्ते अतो मृत्युर्मरणाख्यामुपैति ॥८॥

मर्ममेदिनी—ते = आत्मज्ञानपराङ्मुखाः क्रोधादिभिर्मोहिताः जीवाः तद्वशेः क्रोधादिरूपस्य मृत्योर्वशे वर्तमानाः सन्तः इतः = अस्माल्लोकात्, प्रेताः = मृताः, तत्र = यमलोके, पुनः नरकेषु पतन्ति गच्छन्तीत्यर्थः। ततः अनु = जीवानां नरकेषु गतेषु सत्सु देवाः = इन्द्रियाणि, प्लवन्ते = तत्र गच्छन्ति। इन्द्रियाणां देवाधिष्ठान-कत्वाद्देवशब्देनाभिधानम्। 'तमुत्क्रामन्तं प्राणोनूत्क्रामति प्राणम-नूत्क्रामन्तं सर्वे प्राणाः अनूत्क्रामन्ति' (            ) इति श्रुति रप्याहेन्द्रियाणां जीवानुगमनम्। एतस्मादेवकारणात् मृत्युः = अज्ञानम् मरणस्य = प्राणत्यागस्य आख्याम् = संज्ञाम्, उपैति = प्राप्नोतीत्यर्थः।

अनु०—वे आत्मज्ञानपराङ् मुख क्रोधादिमोहित, तथा क्रोध आदि के वश में रहने वाले जीव इस लोक से यमलोक में जाकर वहां नरक आदि में गिर पड़ते हैं। तदनंतर वहां उनकी इन्द्रियां भी चली जाती हैं। अतएव ही मृत्यु को मरण शब्द से अभि-हित किया जाता है।

कर्मस्वभिप्रवृत्तानां ससारचक्रान्नहि भवति मोक्ष इत्याह—

मू०—कर्मोदये कर्मफलानुरागास्तमानु ते यान्ति न तर[illegible] मृत्यु[illegible]।
सदर्थयोगानवगमात्समन्तात् प्रवर्तते भोगयो[illegible]॥

मर्ममेदिनी—'स्वर्गकामोऽश्वमेवेन यजे' दि[illegible]सूक्तिमनुरुध्य कर्मकृते सति, कर्मफलानुरागाः = कर्मणां फलेष्व[illegible]रागो येषां ते फलाभि सन्धियुक्ता जीवाः, तत्र कृतानां कर्मणां फलभूतषु स्वर्गादिलोकेषु अनुयान्ति = कृतस्य कर्मणोऽदृष्टानुसारेण प्रयान्ति, अतएव ते मृत्यो

रनन्तरमपि मृत्युचक्रं न तरन्ति । स्वर्गिणामपि जीवानाम्–'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' ( गी० ९।२१ ) इति न्यायेन। मर्त्यलोकगमनस्मरणात् । अन्यत्राप्यगासीद् भगवान्—'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथा कर्म यथा श्रुतम्' ( कठो० ५।७ ) 'ओम् तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।' ( गी० १७।२३ ) इति सूक्तावुक्तस्य सच्छब्दवाच्यस्य ब्रह्मणः प्राप्त्यर्थो योगः विवेकविमोकाभ्यासक्रिया–कल्याणानवसादानुद्धर्षरूप–साधन–सप्तकानुगृहीतयमनियमाद्यष्टाङ्गोपेतः तस्या नवगमात् = अलाभात्, समन्तात् = उर्ध्वाधस्तात् देही = देहेन्द्रियमनःप्राणस्वात्माभिमानी, भोगयोगेन भोगवासनया देवमनुष्यतिर्यक्स्थावरेषु योनिषु प्रवर्तते ।

अनुवाद—भोगप्रद कर्मों का उदय होने पर कर्मफलों में वासना रखने वाला जीव स्वर्गादि लोकों में जाता है, अतएव वह संसार के बन्धन को पार नहीं कर पाता । ब्रह्म प्राप्ति के उपायों के अभाव में देह आदि में ही आत्माभिमान रखने वाला जीव भोग की लिप्सा से विभिन्न योनियों में जाता रहता है ॥६॥

विषयाणां स्मरणमेव सर्वेषामनर्थानां हेतुरतएव तेषां विस्मरणमेवमकल्याणाय भवति—

मूल–ाठ नु महामोहनमिन्द्रियाणां मिथ्यार्थयोगस्य गतिर्हि नित्या मिथ्यार्थ एषः भिहतान्तरात्मा स्मरन्नुपास्ते विषयान् समन्तात् ७॥

मर्मभेदि—जीवानां यद्धि मिथ्यार्थयोगस्य क्षणिकेषु शब्दादिविषयेष्वनुरागस्य ...भार्थं नित्या = अनादिकालतः प्रवृत्तभोगवासनावशात् नित्या = नैसर्गिकी गतिः–प्रवृत्तिः तद्ध = तदेवेत्यर्थः इन्द्रियाणां महामोहनम् । अत्र मिथ्याशब्दोऽपि अनित्यपरः शब्दादिविषयाणामनित्यत्वात् । मिथ्यार्थयोगाभिहतान्तरात्मा = क्षणभंगुरे

विषयेषु योहि योगोऽनुरागः = तेनाभिहृतान्तरात्मा व्यथितचित्तो जीवः समन्तात् = सर्वतोभावेन, विषयान् = शब्दादिभोग्यान् स्मरन्नेवोपास्ते । अतएवात्मकल्याणकामिभिर्विषयाणां विस्मरणमेव कर्तव्यम् ।

शब्द आदि विषय नश्वर हैं । उनकी भोगविषयिणी जीवों की स्वाभाविक प्रवृत्ति ही इन्द्रियों का परम सम्मोहन है । क्षणभंगुर विषयों की वासना से व्यथितचित्तवाला व्यक्ति विषयों के स्मरण द्वारा ही उनका भोग करता रहता है ॥१०॥

विषयस्मरणजन्यान् दोषानाह- (१९७८-८०)

**अभिध्या वै प्रथमं हन्ति लोकान् कामक्रोधावनुगृह्याशुपश्चात् ।**
**एते बालान् मृत्यवे प्रापयन्ति धीरास्तु धैर्येण तरन्ति मृत्युम्॥११॥**

मर्मभेदिनी—वै-निश्चयेन, अभिध्या = विषयाणां स्मरणम्, प्रथमम् लोकान् = जीवान् हन्ति = व्यथितचित्तान् करोति । पश्चात्-विषयस्मरणानन्तरम्, आशु = शीघ्रमेव कामः = शब्दादिकाम्यविषयाणां प्राप्तेरभिलाषो जायते । केनचिन्निमित्तेन = काम्यविषयाणामप्राप्तौ क्रोधस्समुत्पद्यते । एते त्रयः क्रमेण श्रेयःप्रेयसोर्विवेकरहितान् विषयोपभोगप्रवणान् बालान् = अजितचित्तान् मृत्यवे = मोहाय प्रापयन्ति । तु = किन्तु ये धीराः = विवेकविमोकादिसाधनसप्तकानुगृहीतमानसाः जितचित्ताः, ते धैर्येणैव = वशित्वगुणेनैव मृत्युं = संसारवृजिनं तरन्ति ॥११।

अनु०—पहले विषयों के चिन्तन से ही भोगी पुरुषों के चित्त व्यथित होते हैं । तदनन्तर शीघ्र ही काम (विषयों की प्राप्ति की इच्छा) तथा काम के विहत होने पर उत्पन्न क्रोध; ये तीनों मिलकर अविवेकी पुरुषों को संसार चक्र में मोहित किये रहते हैं । विवेकी पुरुष विवेक से ही संसार-सागर से पार होते हैं ।

इदानीं विषयोपभोगाद् व्युपरतचित्तं विवेकिनमुपश्लोकयति—

मू०—सोऽभिध्यायन्नुत्पतितान्निहन्यादनादरेणाप्रतिबुध्यमानः ।
नैनं मृत्युर्मृत्युरिवात्ति भूत्वा एवं विद्वान् यो विनिहन्ति कामान् ।१२।

मर्मभेदिनी—सः = संसारसन्तरणेच्छुः अभिध्यायन् = आत्मानं चिन्तयन्, उत्पतितान् कामनेव स्रग्वनितादिषु भोग्यवर्गेषु = अनादरेण = तुच्छत्वबुद्ध्या, पथिपतिततृणलोष्ठादिवत् भोग्यानि वस्तूनि मत्वा, तान् अप्रतिबुध्यमानः = अचिन्तयन्, उत्पतितान् कामानेव निहन्यात् = विनाशयेत् । यो मुमुक्षुः पुरुषः एवमुपयुक्तप्रकारेण विद्वान् आत्मचिन्तनपरायणो भूत्वा कामान् = प्राप्यवस्तूनामभिलाषरूपान्, विनिहन्ति = विनाशयति एनं मुमुक्षुपुरुषं मृत्युः = अज्ञानम्, मृत्युरिव = यम इव नहि अत्ति = ग्रसते ।।१२।।

अनु०—आत्मचिन्तनपरायणपुरुष विषयोपभोग से विरक्त होकर कामनाओं को नष्ट कर देते हैं विषयोपभोग से पराङ्मुख पुरुष को यम मृत्यु का ग्रास नहीं बनाता ।

सकामानां निन्दापूर्वकं निष्कामान् पुरुषान् प्रशंसति-(१६७७)

मू०—कामानुसारी पुरुषः कामाननुविनश्यति ।
कामान् व्युदस्य धुनुते यत्किञ्चित् पुरुषो रजः ।।१३।।

मर्मभेदिनी—जायमानानां कामनां पूर्त्यै सततं तेषामनुसरणं कुर्वन् जीवः कामानेवानुसरन् कदाचिद् अल्पेना कालेन हन्यते । उक्तमपि—कुरङ्गमातङ्गपतङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्च । एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरेव पञ्च ।।" पुरुषः कामान् व्युदस्य = त्यक्त्वा यत्किञ्चित् रजः = पापम् तत्सकलमेव आत्मज्ञानमहिम्नैव धुनुते = नाशयति । आह च—आशैव परमं दुःखम् नैराश्यं परमं सुखम् इति ।।१३।।

अनु०—कामनाओं की पूर्ति में लगा मानव उन्हीं के पीछे, नष्ट

हो जाता है और कामनाओं को त्याग से विवेकी पुरुष सभी दुखों से मुक्त हो जाता है ॥१३॥

सकामानां जीवानां भोग्यवर्गेषु प्रवृत्तिः आत्मनाशाय भवतीति निदर्शनमुखेनाह--

मू०—तमोऽप्रकाशो भूतानां नरकोऽयं प्रदृश्यते ।
मुह्यन्त एव धावन्ति गच्छन्तः श्वभ्रवत्सुखम् ॥१४॥

मर्मभेदिनी --अयम् = कामः भूतानाम् = जीवानाम्, तमः = अज्ञानं तत्कार्यकरत्वात् यतः सः अप्रकाशः = नास्ति प्रकाशो यस्मिन् सः इत्थभूतः कामो नरकवद् दुःखदोऽस्ति यथा प्रमत्ताः जनाः विवेकविहीनत्वात् श्वभ्रवत् गर्तयुक्ते पथि धावन्तः गर्ते पतन्ति, तथैव कामिनो जनाः सन्तविधदुखसंभिन्नानां स्रग्वनितादिऐहिकामुष्मिकाणां सुखानां प्रेप्सया तान्युपयान्ति ॥१४॥

अनु०--काम ही जीवों के लिए अज्ञानकारी, प्रकाशरहित तथा नरक के समान दुखद है। खड्डे वाले मार्ग पर दौड़कर गिर जाने वाले पागल लोगों की भांति, अविवेकीजन कञ्चन और कामिनी जैसे भोग्य वर्ग के सुख के पीछे नष्ट ही हो जाते हैं ॥१४॥

काम्यवस्तुषु त्याज्यबुद्धियुक्तो मुमुक्षुः पुरुषः सर्वदा विषयाणां विस्मरणमेव कुर्यात्--

मू०—अमूढवृत्तेः पुरुषस्येह कुर्यात् किं वै मृत्युस्तार्णइवास्य व्याघ्रः ।
अमन्यमानः क्षत्रिय किञ्चिदन्यन्नाधीयीत निर्णुदन्निवास्यचायुः ।१५।

मर्मभेदिनी---अमूढवृत्तेः = विवेकिनः पुरुषस्य = पुन्सः इह = लोके मृत्युः किं कुर्यात् = किमपि विपरीतं कर्तुं नहि प्रभवेदित्यर्थः अस्य विवेकिनः पुरुषस्य कृते तु मृत्युः तार्णो व्याघ्रो यथा भवति । यथा तृणेन निर्मितं व्याघ्रं दृष्ट्वा भीतिर्नहि जायते तथैव-कुत

कृत्या: प्रतोत्नन्ते मृत्युमिव प्रियातिथिम्' इत्युक्तनयने नचिकेतस्मद्दृशाः विवेकिनः यमस्य स्वागतं व्याहरन्ति । यस्मादेवं वर्तते तस्मादेव कारणात् क्षत्रिय = हे धृतराष्ट्र अस्य = अज्ञानस्य आयुं = जीवनम् निर्णुदन् = अपनेष्यन् मुमुक्षः पुरुषः अन्यत् किञ्चित् काम्यमानं स्त्र्यादिकं, अमन्यमानः = तेषु त्याज्यबुद्धियुक्तत्वात् तमसंस्मरन् नाचीयोत = नहि संस्मरेत् ॥१५॥

विवेकी पुरुष का मृत्यु तृण निर्मित व्याघ्र के समान कुछ भी आकार नहीं कर सकती है । काम को समूल नष्ट करने की इच्छा से उसे स्त्री आदि किसी काम्यवस्तु का स्मरण नहीं करना चाहिये ॥१५॥

विषयाभोगस्येच्छाजन्यो मोह एव मृत्युरूपेण परिणमते । विगतमोहास्तु संसारबन्धान् नूनं प्रमुच्यन्ते ।

मू०—सःक्रोधलोभौ मोहवानन्तरात्मा स वै मृत्युस्त्वच्छरीरे य एषः ।
एवं मृत्युं जायमानं विदित्वा ज्ञाने तिष्ठन्नबिभेतीह मृत्योः ।
विनश्यते विषये तस्य मृत्युर्मृत्योर्यथा विषयं प्राप्य मर्त्यः ॥१६

मर्मभेदिनी—यः त्वच्छरीरे = तवदेहे, एषः = अस्मत् प्रत्ययविषयः अन्तरात्मा = जीवः सः मोहवान् देहादिष्वनात्मस्वात्मबुद्धिरूपविपर्यस्तज्ञानवान् । सः मोह एव क्रोधलोभमृत्युरूपोभवति । एवमुपर्युक्तप्रकारेण मोहाज्जायमानं मृत्युं विदित्वा = ज्ञात्वा, मुमुक्षुः पुरुषः इह = लोके ज्ञाने तिष्ठन् = ज्ञाननिष्ठ इत्यर्थः, मृत्योः = यमात् नहि बिभेति । तस्य = ज्ञानस्य विषये = गोचरे मृत्युः यमः तथैव विनश्यति यथा मृत्योः = यमस्य विषयं प्राप्य = विषयभूत इत्यर्थः मर्त्यः = जीवः विनश्यति ।

तुम्हारे शरीर में विद्यमान मोहग्रस्त अन्तरात्मा ही क्रोध लोभ तथा मृत्युरूप है । इस तरह मोह से उत्पन्न मृत्यु को जानकर



विवेकी पुरुष मृत्यु से भयभीत नहीं होता । ज्ञान के क्षेत्र में मृत्यु

उसी तरह विनष्ट हो जाती है जिस तरह मृत्यु के क्षेत्र में आकर जीव विनष्ट हो जाते हैं।

अत्र शंकते—

मू०—धृतराष्ट्र उवाच = धृतराष्ट्र ने कहा—

यानेवाहुरिज्यया साधुलोकान् द्विजातीनां पुण्यतमान् सनातनान्
तेषां परार्थं कथयन्तीह वेदा एतद्विद्वान् नोपैति कथं नु कर्म॥१७॥

मर्मभेदिनी—'अश्वमेधेन यजेत् स्वर्गकामः' इत्यादिषु वाक्येषु द्विजातीनाम् = ब्राह्मणक्षत्रियवैश्यानाम् इज्यया = यज्ञसाधनेन फलस्वरूपान् यान् पुण्यतमान् सनातनान् ब्रह्मलोकादीन् साधुलोकान् = पुण्यादृष्टवतां जीवानां भोग्यभूतान् लोकान् आहुः वेदविदः तेषाम् इहलोके-वेदाः वैदिकाश्च परार्थम् = मोक्षप्रापकम् कथयन्ति। 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।' 'अपाम सोममृता अभूम' 'त्रिकर्मकृत्तरति जन्ममृत्यू' इत्यादिभिः वाक्यै एतद्-विद्वान् = एतेषां कर्मणां स्वरूपं जानन् विद्वान् कथं नु = कस्मात् कारणात्, कर्मनोपैति = मोक्षावाप्तेरुपायरूपेण नहि वृणोते? विवेकावाप्तेरपेक्षया कर्मणामनुष्ठानस्य सुकरत्वेन कर्मानुष्ठानमेवाङ्गी कर्तव्यम्। इति प्रष्टुर्हृदयम्।

अनुवाद—द्विजातियों के यज्ञ रूपी साधनके द्वारा जिन पुण्यतम सनातन लोकों (ब्रह्मलोकादि) की प्राप्ति बतलायी गयी हैं। वैदिक विद्वान् तथा वेद उन कर्मों को मोक्ष प्राप्ति का साधन बतलाते हैं। तो फिर कर्मों के ज्ञाता उन कर्मों को ही मोक्ष प्राप्ति के साधन रूप से क्यों नहीं अपनाते॥१६॥

धृतराष्ट्रस्य शंका समाधत्ते—

मू० सनत्सुजात उवाच = सनत्सुजात ने कहा—

एवं ह्यविद्वानुपयाति तत्र तत्रार्थजातं च वदन्ति वेदाः।
अनीह आयाति परं परात्मा प्रयाति मार्गेण निहत्य मार्गान्॥१८

मर्मभेदिनी—अविद्वान् हि = अनात्मज्ञानी एव एवम् = भवदुक्त प्रकारेण तत्र कर्मभिः प्राप्यभूते स्वर्गादिलोके उपयाति = प्रयाति। अखिल—जगद्धितानुशासन—कर्तारो वेदाश्च तत्रार्थजातम् तेषामेव स्वर्गादि—लोकानां प्राप्ति—साधनत्वेन तेषां—तेषां कर्मणामुपदेशं कुर्वन्ति। अनीहः परात्मा = त्रिवर्गकामनाविरहितः परयाविद्यया देहत्यागकाले विद्यामहिम्ना मार्गेण = सुषुम्णानाम्न्या नाड्या निर्गत्य तत्तल्लोकप्रापकान् मार्गान् निहत्य—निरस्य, परं प्रयाति = मोक्षमधिगच्छति। तथाचाहुः—

'मुक्तोऽर्चिर्दिनपूर्वपक्षषडुदङ्मासाब्दवातांशुमद्,
ग्लौविद्युद् वरुणेन्द्रधातृमहितः सीमान्तसिन्ध्वाप्लुतः।
श्रीवैकुण्ठमुपेत्य नित्यमजडं तस्मिन् परब्रह्मणः,
सायुज्यं समवाप्य नन्दति चिरं तेनैव धन्यः पुमान्॥
इत्यस्मिन् श्लोके अभियुक्ताः।

राजन् आपके कथनानुसार अज्ञानी पुरुष ही कर्मप्राप्य स्वर्गादिलोकों में जाते हैं। वेद भी इन्हीं की प्राप्तिके साधन रूप से यज्ञादिकर्मों का उपदेश करते हैं। निष्काम पुरुष सुषुम्णा नाड़ी से निकलकर विभिन्न लोकों को प्राप्त करानेवाले धूमादि मार्गों को छोड़कर परमपद को प्राप्त करते हैं।

इदानीं धृतराष्ट्रः शंकते—

धृतराष्ट्र उवाच = धृतराष्ट्र ने कहा—

मू० कोऽसौ नियुंक्ते तमजं पुराणं स चेदिदं सर्वमनुक्रमेण।
किं वास्य कार्यमथवा सुखञ्च तन्मे विद्वन् ब्रूहि सर्वं यथावत्॥१९

मर्ममेदिनी–असौ कोऽस्ति यः तमजं जन्मादिरहितम्, पुराणं = निर्विकारमित्यर्थः पुरुषमस्मिन् सांसारिकेषु कर्मसु नियुंक्ते = व्यापृतं करोति ? चेत् = यदि स एव जीवानां प्राप्यभूतः परमात्मैव जडजंगमादि रूपेण 'तत्सृष्ट्वा तदेवानुप्राविशत् ( तैत्ति.२।६ ) अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' ( छा.उ.६।३।२ ) इत्यादिकानाम् श्रुतीनामनुरोधेन जगद्रूपेण परिणमते; तर्हि अत्रायमनुयोगः उदेति यत्–अनेन कृतेन जागतिकेन क्रियाकलापेन परमात्मनः प्रयोजनम् किम् ? किमपि सुखंलभते वा ? यतोहि 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।' 'यः सर्वज्ञः सर्ववित्' (मु०उ०२।२।७) इत्यादिषु सुशलोकितस्य परमात्मनः प्रवृत्तिःसोद्देश्यैव भवितुमर्हति । परञ्चावाप्तसमस्तकामस्य परमात्मनः स्वार्थ–परमार्थरूपयोः प्रयोजनयोः किमपि प्रयोजनं भवितुं नार्हति । भूते च सति–तस्य 'अवाप्तसमस्तकामत्वमपहीयेत ।' अतएव हे विद्वन् = सनत्सुजात एतत् सर्वं तत्त्वं ब्रूहि = उपदिश ।

अनु०–वह कौन है जो जीवों को तत्–तत् सांसारिक कर्मों में नियुक्त करता है ? यदि परमात्मा ही जड़जंगमात्मक जगत् रूप में परिणत होता है तो उसके इस कार्य के करने का क्या प्रयोजन है ? कृपया मुझे इन सारी बातों को ठीक–ठीक बतायें ।

अत्र समाधत्ते सनत्सुजातः—( १६८१ )

मू०—सनत्सुज़ात उवाच = सनत्सुजात ने कहा–

दोषो महानत्रविभेदयोगे ह्यनादियोगेन भवन्ति नित्याः ।
तथाऽस्य नाधिक्यमपैति किञ्चिदनादियोगेन भवन्ति पुंसः ॥२०॥

मर्ममेदिनी—अत्र जीवपरमात्मनोः विभेदयोगे = विशेषतो

भेदस्वीकारे महान् दोषः संजायेत । जीवपरमात्मनोः चेतनत्व-नित्यत्वश्रौतत्वादि गुणानां समानरूपेण विद्यमानत्वात् । यद्यपि 'भोक्ता भोग्यं प्रेरितारञ्च मत्वा' ( श्वे १।१२) इत्यादिषु श्रुतिषु प्रोक्ताः जीवाः अपि स्वभावतः 'एष आत्मापहतपाप्मा विजरोविमृत्युरविशोकोविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' (छ० उ० ८।१।१) इत्यादिषु श्रुतिषु प्रोक्तेन गुणाष्टकेन सम्पन्ना एव सन्ति अथापि स्वरूपतिरोधानकारिण्याः अनादिमायायाः योगेन ते नित्याः अपि जीवाः संसारबन्धयुक्ता भवन्ति । तथा यद्यपि नित्यमुक्तजीवाः स्वभावतः आविर्भूतगुणाष्टकत्वात् परमात्मनः सदृशा एव विद्यन्ते तथाप्यस्य परस्यपुरुषस्य जीवेभ्यः आधिक्यम् = स्वामित्व-नियामकत्व-जगद्व्यापारयुक्तत्व-; जगन्मूलत्व व्यापकत्वादिरूपम् किञ्चिदपि नापैति = नहि दूरी भवति । अनादियोगेन = अनादिसत्यसंकल्परूपेण सवन्धेन पुंसः पुरुषादिमे जीवाः अभिव्यक्तनामरूपवन्तो नामरूपविभागार्हाः भवन्तीत्यर्थः

अनु०—जीवात्मा और परमात्मा में विशेष भेद मानना अनुपपन्न है। अनादिमायाके संवन्ध के कारण ही नित्य जीव भी संसारी वन जाते हैं । फिर भी जीवात्मा एवं परमात्मा में विद्यमान भेद का अपलाप नहीं किया जा सकता है । परमात्मा के अनादि सत्यसंकल्प से जीव व्यक्त नामरूप वाले हो जाते हैं ।

उपर्युक्तमर्थमेव स्पष्टयते—

मू० य एतद्वा भगवान् स नित्यो विकारयोगेन करोति विश्वम् ।
तथा च तच्छक्तिरितिस्म मन्यते तथार्थयोगे च भवन्ति वेदाः॥२१।

मर्मभेदिनी–यो वै = निश्चयेन एतत् नित्यः–'नित्यो नित्यानाम्' इति श्रुत्यनुसारेण अनादिनिधनः भगवान् सम्पूर्णैश्वर्यवीर्य से

जश्शक्तिज्ञानबलैः षड्विधैरेश्वर्यैः सम्पन्नः सः एव विकारयोगेन = 'सतत्त्वतोऽन्यथा प्रथा' रूपेण परिणामेन द्वारा, विश्वम् = सम्पूर्णं जगत् करोति = सृजते । किञ्च, तच्छक्तिः = परमात्मनः शक्ति तथा विविधविध विचित्रस्यजगतः सृष्टिस्थतिसंहारकरणानुकूला वर्तते इति मन्यतेस्म । किञ्च तथार्थं योगे = सम्पूर्णस्य जगतः स्वसत्य संकल्पेनैव सृष्टिस्थित्यन्तकरणरूपे परमात्मनः शक्तिविषये वेदाः- 'यः सर्वज्ञः सर्ववित्' (मु० उ० २।२।७) परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' ( श्वे० ६।८ ) 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः (छा० उ० ६।८।४,६) इत्यादिकाः प्रमाणम् भवन्ति ।

अनु०--यह नित्य परमात्मा ही अपनी परिणाम शक्ति के द्वारा जगत् को उत्पन्न करता है । पूर्वाचार्य भी परमात्मा की इस प्रकार की शक्ति को मानते थे तथा वे परमात्मा की इस शक्ति का प्रतिपादन करते हैं ।

पुनः धृतराष्ट्रः शंकते--

मू०—धृतराष्ट्र उवाच—धृतराष्ट्र ने कहा ।

**येऽस्मिन्धर्मान्नाचरन्तीह केचित्तथा धर्मान् केचिदिहाचरन्ति ।**
**धर्मः पापेन प्रतिहन्यते स्विदुताहो धर्मः प्रतिहन्ति पापम् ॥२२॥**

मर्मभेदिनी--ये = केचित् मुमुक्षवः, अस्मिन् मोक्षहेतौ इह = लोके, धर्ममाचरन्ति = स्ववर्णाश्रमाणामनुसारेण वेदविहितानां कर्मणामाचरणं नहि कुर्वन्ति येच केचित् धर्माणामाचरणं कुर्वन्ति, तेषां जनानां कर्मणां विषये इयं शंका जागर्ति यत्-किम् धर्मः = पापेन पूर्वकृतेन कर्मणा प्रतिहन्यते = विनाश्यते उताहो धर्म एव पापं विनाशयति ? धर्मं पापयोर्बाधकः कः, पापो धर्मो वा ?

अनु०--कुछ लोग इस लोक में मोक्ष की प्राप्ति के लिए धर्म का आचरण नहीं करते हैं और कुछ लोग करते हैं। क्या धर्म पाप को नष्ट करता है अथवा पाप के द्वारा वह ही विनष्ट हो जाता है?

अत्र सनत्सुजातः समाधत्ते---

मू०—सनत्सुजात उवाच = सनत्सुजात ने कहा—

उभयमेव तत्रोपयुज्यते फलं धर्मस्यैवेतरस्य च ॥२३॥

मर्मभेदिनी---तत्र = मोक्षप्राप्तौ उभयस्यैव-स्ववर्णाश्रमानुकूलानां धर्माणामाचरणस्यैव भगवत्कृपामेव मोक्षहेतुं मत्वा सर्वधर्मान् परित्यज्य केवलं प्रपत्तेर्बलेनैव स्थितेश्च' उपयुज्यते = उपयोगो भवतीत्यर्थः। इति शंकाश्लोकस्य पूर्वार्द्धस्योत्तरम्। अथ शंका श्लोकस्योत्तरार्द्धं समाधत्ते-फलम् येन प्रकारेण कृतस्य धर्मस्य स्वर्गादिप्राप्तिरूपं भवति तेनैव प्रकारेण इतस्य = पापस्यापि नरकादि प्राप्ति रूपं भवति। अतएव धर्मपापयोः परस्परं नास्ति बाध्य-बाधकभावः।

अनु०-मोक्ष प्राप्ति में धर्माचरण तथा धर्माचरण से भिन्न संन्यास रूप प्रपत्ति दोनों का उपयोग होता है। किञ्च-फल भी धर्म के ही समान पाप का भी मिलता है।

इदानीं कर्मणां कर्मसंन्यासरूपायाः विद्यायाश्च मोक्षाधिगमहेतुत्वं वक्ति--

तस्मिन्स्थितौ वाप्युभयं हि नित्यं ज्ञानेन विद्वान् प्रतिहन्ति सिद्धम्।
तथान्यथापुण्यमुपैति देही तथागतं पापमुपैति सिद्धम् ॥२४॥

मर्मभेदिनी-तस्मिन् मोक्षे स्थितौ आविर्भूतगुणाष्टकरूपेण स्थितौ उभयमपि = वर्णाश्रमानुकूलानां धर्माणामाचरणम् सर्वधर्म-

संन्यासरूपिणो न्यासविद्या च नित्यत्वा = अखिलमेवाङ्गम् । आहापि श्रुतिः-'विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ।' (ईशा०११) विद्वान् = समधिगतविद्यः पुरुषः, ज्ञानेनस्वस्वरूपविवेकद्वारा, सिद्धम् = ब्रह्म, प्रविहन्ति = प्राप्नोति । गत्यर्थकोऽयंहन्तेः प्रयोगः । तथा = किञ्च, अन्यथा = सकामकर्म कुर्वन् देही = अनात्मज्ञः स्वर्गादिफलकं पुण्यादृष्टमुपैति । तथागतम् = तेन प्रकारेणस्थितम् सिद्धम् = नरदेहाभिमानजं पापमपि कदाचिदुपैति । स्मरन्ति चाभियुक्ताः जयविजयादीनां देवानां देहाभिमानजेन पापेन पतनम् ।

अनु०-मोक्ष की स्थिति में धर्माचरण तथा सर्वधर्मसंन्यास रूपीविद्या दोनों ही अविचाली साधन हैं । सकाम कर्मों को करके जीव पुण्यादृष्ट को प्राप्त करता है तथा स्वर्गादि में जाकर भी जीव देहाभिमान जन्य पापके कारण पापी बन जाता हैं ॥२४॥

पापस्य पुण्यबाध्यता मुपपादयति-

मू०गत्वोभयं कर्मणा युज्यतेऽस्थिरं शुभस्य पापस्य स चापि कर्मणा
धर्मेण पापं प्रणुदतीह विद्वान् धर्मो बलीयानिति तस्य सिद्धिः॥२५

मर्मभेदिनी-पुण्यापुण्यकर्मणां कर्ता जीवः, शुभस्य = पुण्यादृष्ट जनकेन पापादृष्टजनकेन चापि कर्मणा उभयम् = स्वर्गनरकादि-लोकगमनरूपं फलम् गत्वा = उपभुज्य पूर्वकृतकर्मणां संस्कारानुसारेण कर्मणा स्थिरं युज्यते = स्थिरं योगं तत्तद्यान्यानुसारेण अवाप्नोति । इह = अस्मिन् लोके, विद्वान् धर्मेण पापं प्रणुदति = अपाकरोति । अविवेकी तु धर्मस्यापि फलं स्रगवनितादिभोग्यवस्तुजातमेवेच्छति । यस्मात् कारणात् धर्मेण पापमपाकृतं भवति तस्मात् कारणात् धर्म एव बलीयान् = बाधक इत्यर्थः नत्वधर्मः । इति अनेन प्रकारेण तस्य धर्माचरणं कुर्वतो विदुषः कालेन मोक्षावाप्ति

रूपा सिद्धिरपि भवति ॥ २५ ॥

अनुवाद–जीव अपने किये हुए पुण्य पाप कर्मोंके फल स्वर्ग नरक आदि को भोगकर अपने प्राचीन संस्कारानुसार प्राप्त योनि के अनुरूप कर्मों को करता है। विवेकी पुरुष पुण्यके द्वारा पापों का अपनोदन करता है और कभी-कभी उसी के द्वारा मोक्षभी पा लेता है। एतएव पुण्य ही पापका बाधक है ॥ २५

स्ववर्णाश्रमानुसारेणानुष्ठितैः कर्मभिः तेषाँ-तेषां लोकानां प्राप्तिर्भवतीति निष्कामकर्मभिश्च–मोक्षोऽवाप्यते इति मत्वा पृच्छति।

मू० धृतराष्ट्र उवाच–धृतराष्ट्र ने कहा–

यानिहाहुः स्वस्य धर्मस्य लोकान् द्विजातीनां पुण्यतमान् सनातान्।
तेषां क्रमान्कथय ततोऽपि चान्यान् नैतद् विद्वन्वेत्तुमिच्छामि कर्म॥२६

मर्मभेदिनी–हे विद्वन् = सनत्सुजात, पुण्यकृताम् द्विजातीनाम् 'अपाम सोममृता अभूम।' अक्षय्यं ह वै चातुर्मास्यस्य याजिनः सुकृतं भवति। यस्यैतेऽष्टचत्वारिंशत्संस्काराः स ब्रह्मणः सायुज्यं सलोकतां गच्छति।' इत्यादिभिः श्रुतिभिरुक्तान् स्वधर्मस्य = स्ववर्णाश्रमानुसारस्य विहितकर्मणः। सनातनान = नित्यान् लोकान्–आहुः ऋषय इतिशेषः, तेषां क्रमान् = धर्मतारतम्येनोच्चनीचभावान्, ततोऽप्यन्यान् = फलाभिसंधिरहितान् नैष्कर्म्यसंपादकान् मोक्षद्वार भूतांश्च कथय, एतत्–स्वधर्मव्यतिरिक्तं स्वाभाविकं प्रवृत्तिविषय भूतं निषिद्धं काम्यञ्चकर्म न = नहि वेत्तुम् = ज्ञातुम् इच्छामि।

अनु०–विद्वन् सनत्सुजात द्विजातियों के धर्मभूत कर्मों द्वारा प्राप्य नित्य लोकों के साधक कर्मों के क्रमों को तथा उनसे भिन्न मोक्षप्रद कर्मों को आप बताये मैं इन काम्य तथा निषिद्ध कर्मों के विषय में नहीं जानना चाहता।

कर्मविषये कृतस्य धृतराष्ट्रेण प्रश्नस्योत्तरमाह आचार्यः सनत्सुजातः—

मू० सनत्सुजात उवाच—सनत् सुजात ने कहा—

येषां व्रतेऽथ विस्पर्धा बले बलवतामिव ।
ते ब्राह्मणा इतः प्रेत्य ब्रह्मलोकप्रकाशकाः ॥ २७ ॥

मर्मभेदिनी–येषां-शक्त्यवाप्तये बले = बलस्यविषये, बलवतामिव = यथाकश्चनबलवान् स्वेतरसमस्तेभ्यो मल्लेभ्योऽधिकबलशाली बुभूषति तथैव व्रताचरणनिष्ठानां यतमानानाम् ब्राह्मणानां व्रते = शमदमादिसाधने विस्पर्धा अहमेव स्वेतरसमस्तेभ्यस्साधकेभ्योऽधिकेन शमादिना सम्पन्नः स्यामित्याकारिका अहमहमिका भवति, ते ब्राह्मणाः विश्वामित्रादिवत् तपस्याभिनिवेशात् इतः प्रेत्य = अस्माल्लोकात् प्रकर्षेण गत्वा, ब्रह्मलोकप्रकाशकाः, ब्रह्मणो लोकस्य भागिनो भवन्तीति शेषः ॥२७॥

जैसे कोई बलवान् सभी मल्लों से अधिक बलवान् होने के लिए स्पर्धा करता है उसी तरह जिन ब्राह्मणों की शमादि साधन सम्पत्ति की प्राप्ति के लिए व्रताचरण की स्पर्धा होती है वे ब्राह्मण इस लोक से मरकर ब्रह्मा के लोक में जाते हैं ॥ २७ ॥

योगधर्मस्य फलं ब्रह्मणो लोकस्य प्राप्तिमुक्त्वेदानीं इज्याधर्मस्य फलमाह—

मू० येषां धर्मे च विस्पर्धा तेषां तज्ज्ञानसाधनम् ।
ते ब्राह्मणा इतो मुक्ताः स्वर्गं यान्ति त्रिविष्टपम् ॥२८॥

मर्मभेदिनी—च = पुनः, येषाम् = ब्राह्मणानाम् धर्मे = यज्ञादिधर्मानुष्ठाने, विस्पर्धा–अहमेवसर्वापेक्षया सर्वाङ्गसम्पन्नं सर्वोत्तमं यज्ञादिकं कुर्याम् इत्याकारिका स्पर्धा भवति तेषां ब्राह्मणा-

नाम् तत् = यज्ञाद्यनुष्ठानं स्वस्वरूप-परस्वरूपादीनां ज्ञानस्य साध भवति । श्रुतिरपि-यज्ञादिकस्य विविदिषापादनद्वारा ब्रह्मज्ञान स्य साधनतां वक्ति । तथाहि-"तमेतं वेदानुवचनेन ब्राह्मणा विवि दिषन्ति, यज्ञेन-दानेन तपसानाशकेन ।' ते यज्ञादिसम्पादक ब्राह्मणा इतो मुक्ताः त्रिविष्टपम् स्वर्गम् यान्ति ॥ २८ ॥

जिन ब्राह्मणों की स्पर्धा यज्ञादि अनुष्ठान के विषय में होती है, उनका वह यज्ञादि ब्रह्मविविदिषा के माध्यम से ज्ञान क साधन बनता है । वे ब्राह्मण इस लोक को त्याग करके स्व लोक जाते हैं ॥२८॥

अकरणे प्रत्यवायं मत्वा सततं धर्मानुष्ठानं कुर्वाणानाम् आत्म ज्ञानस्वर्गादिप्राप्तिनिरपेक्षाणां विषये प्राह—

मू० तस्य सम्यक् समाचारमाहुर्वेदविदो जनाः ।
नैन मन्येत भूयिष्ठं बाह्यमाभ्यन्तरं जनम् ॥ २९ ॥

मर्मभेदिनी—तस्य = नित्यनैमित्तिकप्रायश्चित्तादिरूपस्य धर्मस्य समाचारम् = सम्यगनुष्ठानम्, वेदविदो जनाः = विधिवाक्योक्ताचारा णामनुष्ठानमावश्यकंस्वीकुर्वन्तः, आत्मज्ञानपराङ्मुखाः वैदिका जनाः, सम्यक् = समीचीनम् आहुः । बाह्यम् = औपाधिकेषु वर्णा श्रमादिषु अभिनिवेशत्वाद् बहिर्मुखम्, वैदिकत्वात् निष्कामत्वा च्चाभ्यन्तरम् एनम् = ऐहिकामुष्मिकफलेभ्यो निरपेक्षतया केवलं कर्मपरायणं जनम् भूयिष्ठमत्यन्तं, न मन्येत् सामान्यतस्तु सम्म नयेदेव । अतएव हि आनन्दवल्याम् आनन्दमीमांसायाः प्रकर हिरण्यगर्भादर्वाचीनानां मानुषादीनामानन्दगणनायां उत्तरोत्त शतगुणितायां 'स एक इन्द्रस्यानन्दः स एक प्रजापतेरानन्दः' इ प्रतिपर्यायं श्रोत्रियस्य चाकामहतस्येत्यानन्दोत्कर्षः श्रूयते ।



अनु—वर्णाश्रमधर्मों के अनुष्ठान को वैदिकों ने उत्तम मा

है। किन्तु उस वहिर्मुख तथा अन्तरनिष्ठ निष्काम वर्णाश्रम धर्मानुष्ठान कर्ता का वहुत सम्मान नहीं करना चाहिये।

सम्प्रत्यहिंसाप्रधानान् योगधर्मानुपदिशति—

मू० यत्रमन्येत भूयिष्ठं प्रावृषीव तृणोलपम्।
अन्नं पानं ब्राह्मणस्य तज्जीवेन्नानुसञ्ज्वरेत् ॥३०॥

मर्मभेदिनी—अहिंसा धर्मनिरतस्संन्यासी यत्र = यस्यगृहस्थस्य गृहे, प्रावृषि = वर्षाकाले, उलपम् = उच्छ्रिततरं तृणमिव, ब्राह्मणस्य = संन्यासिनः कृते, अन्नं पानम् = भोजनजलादिकम् भूयिष्ठम् = अत्यन्तम् मन्येत = अवगच्छेत्, तत्रैव प्राणयात्रायाः निर्वाहं कुर्यात् नतु कञ्चन क्षीणवृत्तिं गृहस्थं पीडयेत्। नानुसंज्वरेत् = कदाचित् क्षुधादिभिरात्मानं न पीडयेदित्यर्थः ॥ ३० ॥

अनु०—संन्यासी वर्षाकाल में उगने वाले उलप घास के समान जिस गृहस्थ के घर मे ब्राह्मण को देने के लिए प्रभूत अन्न-जल समझे उसी के यहाँ निवास करके जीवन यात्रा का निर्वाह करे, कभी भूख आदि से अपने को पीड़ित न करे ॥३०॥

परपीडां मानञ्चत्यजेदित्याह भङ्ग्यन्तरेण—

मू० यत्राकथयमानस्य प्रयच्छत्यशिवं भयम्।
अतिरिक्तमिवाकुर्वन् सः श्रेयान्नेतरो जनः ॥३१॥

मर्मभेदिनी—यत्र = यस्मिन् देशे, अकथयमानस्य = स्वमाहात्म्यमप्रकाशयतः, अशिवममङ्गलं, भयञ्च प्रयच्छतो देशस्य जनस्यचविषये अतिरिक्तम्वधिकम् अकुर्वन्निव स्वमाहात्म्यप्रकर्षं अप्रकाशयन् इव यो जनो भवति स एव–श्रेयान् = प्रशस्यतरः, इतरो न = स्वमाहात्म्यस्य प्रकाशनेन समाजे सम्मानं वृत्तिञ्च लभमानः पुरुषो नो प्रशस्यतरः ॥ ३१ ॥

अनु०-अपने ऐश्वर्य से अपरिचित व्यक्तियों द्वारा अपमानित किये जाने पर भी अपनी महिमा को न प्रकाशित करने वाला ब्राह्मण ही प्रशंसनीय होता है।

उपर्युक्तेन प्रशस्यतरेण पुरुषेण कस्यान्नं भोक्तव्यमिति निर्दिशति—

मू० यो वा कथयमानस्य ह्यात्मानं नानुसंज्वरेत्।
ब्रह्मस्वं नोपभुञ्जीत तस्यान्नं संमतं सताम् ॥२२॥

मर्मभेदिनी-वा=निश्चयेन यः=गृहस्थः कथयमानस्य स्वकीयं माहात्म्यं प्रकाशयतो जनस्योपरि आत्मानं नानुसंज्वरेत्=तस्य प्रकर्षातिशयं दृष्ट्वा नहि संतप्तो भवेत् किञ्च 'यतिश्च ब्रह्मचारीच पक्वान्नस्वामिनावुभौ' इति स्मृत्यनुसारेण यतिं ब्रह्मचारिणश्च पक्वान्नमदत्त्वा स्वयमेव भोजनम् ब्रह्मस्वभोजनं तथा यो नहि कुर्वीत् तस्यैव सदाचारपरायणस्य गृहस्थस्यान्नं सताम् सज्जनानाम् कृते, मतम्=ग्राह्यमित्यर्थः।

अनु०-यो दूसरे के उत्कर्षको सुनकर उससे ईर्ष्या न करे (न जले) तथा ब्रह्मस्व को न खाय उसी गृहस्थ का अन्न सज्जनों के लिए ग्राह्य है।

स्वप्रभाव प्रकाशनेन भैक्षमाचरतः संन्यासिनो गर्ह्यत्वमाह-

यथा स्व वान्तमश्नाति श्वा वै नित्यमभूतये।
एवं ते वान्तमश्नन्ति स्ववीर्यस्योपसेवनात् ॥२३॥

मर्मभेदिनी-यथावै=येन प्रकारेण श्वा=नित्यम् सर्वदा अभूतये=आत्मनः अकल्याणायैव स्वंवान्तम्=स्वेनेव कृतम् वमनम् अश्नाति भुंक्ते तथैव स्ववीर्यस्योपसेवनात्-स्वपाण्डित्यप्रकाशनादिरूपस्य प्रकर्षस्यविकत्थनात् भैक्षम् ये संन्यासिनः आचरन्ति वान्तम-

श्नन्ति = वान्ताशिन एव। येन प्रकारेण वान्ताशित्वात् श्वा गर्ह्यो भवति तेनैव प्रकारेण स्वपाण्डित्यादिप्रकाशनद्वारा सत्सुखं भैक्षमाचरन्तस्संन्यासिनोऽपि निन्दनीया एव ॥ ३३ ॥

जिस तरह अपने वमन का भक्षण करने के कारण कुत्ता निन्दनीय है उसी तरह अपने पाण्डित्यादि प्रकाशन के द्वारा भिक्षाटन करने वाले संन्यासी गर्हणीय हैं ॥३३॥

"पण्डितो बाल्येन निर्विद्य तिष्ठेत" इति श्रुत्यनुसारेण स्वेषु जनेषु मध्ये वसन्नपि ब्रह्मवित् स्वमहात्म्यं नहि प्रकाशयेदिति प्राह-

मू० नित्यमज्ञातचर्या मे इति मन्येत ब्राह्मणः ।
ज्ञातीनां तु वसन् मध्ये तं विदुर्ब्राह्मणं बुधाः ॥३४॥

मर्मभेदिनी-यः ब्रह्मणः ज्ञातीनां मध्ये वसन् तु = निवासं कुर्वन्नपि, मे ज्ञातयः = मम बान्धवाः, नित्यमज्ञातचर्याः = सर्वथा ममाचरणस्य विषयेऽनभिज्ञास्स्युरिति मन्येत, तमेव ब्रह्मवेत्तारं बुधाः = मनीषिणः ब्राह्मण विदुः = वास्तविकं ब्रह्मवेत्तारं प्राहुः ॥ ३४ ॥

अपने लोगों के बीच में रहकर भी जो ब्रह्मवेत्ता चाहता है कि मेरे बान्धव मेरी चर्या के विषय में नहीं जान सकें मनीषियों की दृष्टि में वही वास्तविक ब्रह्मवेता है ।

मू० को ह्यनन्तरमात्मानं ब्राह्मणो हन्तुमर्हति ।
निर्लिङ्गमचलं शुद्धं सर्वद्वैतविवर्जितम् ॥

मर्मभेदिनी— इदृशीं चर्यां विना को ब्राह्मणः = ब्रह्मविद्, अनन्तरम् = अज्ञानजन्यदोषरहितेभ्यो नित्यमुक्तेभ्यो जीवेभ्यः सततमपरोक्षम्; श्रुतिरप्याह—सदापश्यन्तिसूरयः' इति । आत्मानम् = 'एतदात्म्यमिदं सर्वम्' इति श्रुतौ सर्वेषामात्मत्वेन प्रोक्तम्, निर्लिङ्गम्, शास्त्रैकवेद्यत्वादनुमानादिप्रमाणानामविषयभूतम् अचलम् = अगतिकम् ... [illegible]

चिदात्मत्वात् शरीरशरीरिणोरभेद इव सर्वद्वैतविवर्जितम् ब्रह्म, हन्तुम् = गन्तुम् वेत्तुमिति यावद् अर्हति ?

अनु०—इस प्रकार की अज्ञात चर्या के बिना अनन्तर नित्य मुक्त जीवों के लिए (अपरोक्ष) प्रमाणों के अविषयभूत, व्यापक, अखिलहेयप्रत्यनीक तथा सभी भेदों से रहित ब्रह्म को कौन ब्रह्मवेत्ता जान सकता है ?

क्षत्रिया अपि ब्रह्मसाक्षात्काराधिकारिण:—

सू० तस्माद्धि क्षत्रियस्यापि ब्रह्मावसति पश्यति ॥३६॥

मर्मभेदिनी-इत्थगज्ञातपरचर्यावितत्त्वादेव ब्राह्मणव्यतिरिक्तस्य क्षत्रियस्यापि हृदये ब्रह्म आवसति स्वप्रकाशेन आत्मनि स्वस्वरूप-परस्वरूपेत्यादेर्याथात्म्यं प्रकाशयति ।

अनु०—इस प्रकार की अज्ञातचर्या वाले क्षत्रिय के भी हृदय में ब्रह्म का स्वरूप प्रकाशित हो जाता है ।

आत्मनः स्वरूपज्ञानाभावे दोषमाह—

सू० योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥३७॥

मर्मभेदिनी—योह्यनात्मज्ञः अन्यथा सन्तम् = कर्तृत्वभोक्तृत्वादियुतम् स्वभावतः सत्यकामत्व-सत्यसंकल्पत्वादिगुणसमन्वितम् देहेन्द्रियमनःप्राणधीभ्यो भिन्नम्, आत्मानम् अन्यथा = देहेन्द्रियमनः प्राणज्ञानरूपेण स्वभावतः कर्तृत्वादि राहित्येन प्रतिपद्यतेमनुते । तेन आत्मापहारिणा = आत्मस्वरूपस्य विपर्यासकारिणा अतएव चौरेण किं पापं न कृतम्—सर्वविधमेव कृतमिति यावत् । आत्मनः कर्तृत्वादिकं हि— 'भोक्ता भोग्यं प्रेरितारञ्च मत्वा' "एवमेवैष प्राणान् गृहीत्वा शरीरे यथा कामं परिवर्तते ।' ( बृ०४।१।१८ )

विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' ( तै० आ० ५।१ ) इत्यादिकाः श्रुतयः; 'कर्ताशास्त्रार्थवत्त्वात्' ( ब्र०सू०२।३।३३) 'उपादाना द्विहारोपदेशाच्च' ( ब्र०सू० २।३।३४ ) 'व्यपदेशाच्च क्रियायाम्, न चेन्निर्देशविपर्ययः' ( ब्र०सू० २।३।३५ ) प्रभृतीनि सूत्राणि, 'तत्रैवं सति कर्तारम्' (गी०१८।१६) 'अधिष्ठान तथा कर्ता' (गी०१८।१४) इत्यादिकाः स्मृतयश्च प्रतिपादयन्ति ।

अनु०—कर्तृत्वादिगुण संपन्न देहादि से भिन्न आत्मा को भिन्न प्रकार से बतलाने वाले आत्मापहारी चोर ने कौन सा पाप नहीं किया ?

स्वरूपज्ञस्य कानिचन लक्षणान्याह—

मू०—अश्रान्तस्स्यादनादाता संमतो निरूपद्रवः
शिष्टो नशिष्टवत्सस्याद् ब्राह्मणो ब्रह्मवित्कविः ॥३८॥

मर्मभेदिनी—यः निगूढाचार : पुरुषः, अश्रान्तः=शारीरिक मानसिकश्रान्तिरहितः, अनादाता=अपरिग्रही, सज्जनानां सम्मतः, अतएव=शरीरधर्मभूते अशनायापिपासादिकैरहितत्वात् निरुपद्रुतः स्यात् । किञ्च विहितानां स्ववर्णाश्रमानुकूलानां सर्वेषां नित्यनैमित्तिकानां कर्मणामावरणयुक्तत्वात् शिष्टोऽपि स्वचर्यायाः प्रकाशनपराङ्मुखत्वात् शिष्टवन्नहि प्रतीयेत सो ब्राह्मणो= ब्रह्मज्ञः ब्रह्मवित=ब्रह्मवेता, कविः=क्रान्तदर्शी च स्यादिति ॥३८॥

अनु०—( शारीरिक ) मानसिकश्रान्ति से रहित, असंग्रही सज्जनों को अभिप्रेत तथा भूख प्यास आदि से रहित शिष्ट होकर भी निगूढाचारवान् होने के कारण शिष्ट के समान नहीं प्रतीत होने वाला ब्राह्मण ही ब्रह्मवेत्ता तथा क्रान्तदर्शी होता है ॥३८॥

किञ्च—वैदिकाचारसम्पन्नान् प्रशंसन्नाह

मू० अनाढ्या मानुषे वित्ते आढ्या दैवे तथा क्रतौ, दुर्धर्षा ये द्विजा-
ते दुर्धर्षा दुष्प्रकम्प्याः विद्यात्तान् ब्रह्मणस्तनूम् ॥३९॥

मर्मभेदिनी—ये सर्वसङ्गत्यागसमन्विताः द्विजाः = त्रैवर्णिकाः मानुषे वित्ते = लौकिकानां मानवसुलभानाम् पुत्रमित्रकलत्रसम्पदादीनां विषये अनाढ्याः = असम्पन्नाः सन्ति, किन्तु ये दैवे = श्रोत्रग्राह्यशास्त्रैकवेद्ये धर्मादौ क्रतौ परमात्माराधनरूपायां 'स क्रतुं कुर्वीत' इत्यादिषु श्रुतिषु प्रोक्तायामुपासनायाञ्च आढ्याः = सम्पन्नाः सन्ति—आढ्या वेदेषु ये द्विजा इति पाठभेदेऽप्ययमर्थः सुगमः। ते ब्राह्मणाः दुर्धर्षाः = अप्रसहनीयाः, दुष्प्रकम्प्याः = अविचाल्याश्च भवन्ति। तान् = ज्ञानिनः, ब्रह्मणस्तनूम् 'ज्ञानीत्वात्मैव मे मतम्' इति नयेनात्यन्तप्रियत्वात् ब्रह्मणः शरीरम् विद्यात् = अवगच्छेत्॥

अनु०—लौकिक सम्पत्ति विहीन किन्तु वैदिक (विहित) क्रियाओं के धनी दुर्धर्ष एवं अविचाली ब्राह्मणों को परमात्मा का शरीर समझना चाहिये।

इदानीं मोक्षस्य परमपुरुषार्थत्वात् तदर्थं यत्नं कुर्वतो ब्रह्मज्ञानिनः सर्वक्रतुकर्तृभ्यः श्रेष्ठ्यमाह—

मू० सर्वान् स्विष्टकृतो देवान् विद्याद् य इह कश्चन।
न समानो ब्राह्मणस्य तस्मिन् प्रयतते स्वयम् ॥४०॥

मर्मभेदिनी—इह जगति यः कश्चन = अश्वमेधादिकानां सर्वेषां ऐहिकामुष्मिकाणां काम्यानां वस्तूनां फलप्रदातॄणां क्रतूनां कर्ता सर्वान् = सकलान्, स्विष्टकृतः = स्विष्टं शोभनमिष्टं दिव्यस्त्र्यन्नपानादिकं ये यागेन प्रीताः सन्तो यजमानाय कुर्वन्ति ते स्विष्टकृतो देवाः तान् सर्वान् देवान् विद्यात् = साक्षात्कुर्यात् सोऽपि ब्राह्मणस्य = ब्रह्मज्ञस्य, समानः = सदृशो न = नहि भवितुमर्हति।

यतः सः स्वयमेव तस्मिन् = स्विष्टे निमित्ते प्रयतते । अयमाशयो यत्–'यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति श्रुत्यनुसारेण सर्वेषां कर्मफलानामनित्यत्वादल्पत्वात् क्षय्यत्वाच्च तेषां कर्मणां अक्षय्यानल्पनित्यफलप्रदेन ब्रह्मज्ञानेन-साकं साम्यं नहि भवितुमर्हति ॥ ४०॥

अनु०–यागादिके द्वारा प्रसन्न होकर अभिप्रेत लौकिक तथा स्वर्गीय फलों को प्रदान करने वाले सभी देवताओं का यज्ञादि के द्वारा साक्षात्कार करने वाले की समता ब्रह्मज्ञानी से नहीं हो सकती क्योंकि क्रतु करने वाला व्यक्ति स्विष्टों के लिए स्वयम् प्रयास करता है । ४० ॥

वीतरागेण पुरुषेण मानापमानयोः समानेन भवितव्यम्–

मू०–यमप्रयतमानं तु मानयन्ति स मानितः ।
न मन्यमानो मन्येत न मान्यमभिसंज्वरेत् ॥४१॥

मर्मभेदिनी–अप्रयतमानम् तु ऐहिकामुष्मिकाणां फलानामवाप्तये किमपि प्रयासमकुर्वाणः अपि यम् = वीतरागम् पुरुषम्, शिष्टाः पुरुषाः मानयन्ति, सः पुरुषः, मानितः = सम्मानितः, मान्यमानोऽपि आत्मानम् सम्मानितं न मन्यते न वा अपमाने अभिसंज्वरेत् = संतप्तो भवेदित्यर्थः ॥

अनु०–वीतराग मुमुक्षु पुरुष को चाहिये कि वह किसी के द्वारा सम्मानित होकर न तो हर्ष का अनुभव करे और न तो अपमानित होकर संतप्त हो ।

इदानीं मुमुक्षुरुषः मानपमानयोः केन प्रकारेण वर्तेत इत्याह श्लोकद्वयेन–

मू०–लोकस्वभाववृत्तिर्हि निमेषोन्मेषवत्सदा ।
विद्वांसो मानयन्तीह इति मन्येत मानितः ॥४२॥

मर्मभेदिनी–सम्मानितः पुरुषः यतः लोकस्वभाव वृत्तिर्हि-लोकस्य स्वाभाविकी प्रवृत्तिः सदा = सर्वदा, निमेषान्मेषवत् = पक्ष्मणः पातनोत्तनवत् परिवृत्तिमयी भवतीति जगति नेमिचक्रक्रमेण साम्प्रतम् विद्वांसः इह तत्त्वज्ञाः माम् मानयन्ति = सम्मानयन्ति अतः नेदं प्रहर्षस्य स्थानमिति मन्येत = जानीयात्।

अनु०–सम्मानित होकर वितरागपुरुष को मानना चाहिए कि चूँकि नेत्रों के पलक गिरने तथा उठने के समान ही लोक का स्वाभाविक प्रवृत्ति होती है, अतएव विद्वान् लोग मेरा आदर करते हैं

किञ्च—

मू०–अधर्मनिपुणाः मूढा लोके मायाविशारदाः ।
न मान्यं मानयिष्यन्ति इति मन्येदमानितः ॥४३॥

मर्मभेदिनी–अधर्मनिपुणाः–निषिद्धाचारपरायणाः अतएव आत्मस्वरूपस्य अज्ञानिनो जनाः । अनभिज्ञत्वात् मूढाः लोके = जगति, मायाविशारदाः = छलप्रवञ्चनामये व्यवहारे पटवः जनाः मान्यम् = सम्माननीयमपि जनम्, नहि मानयिष्यन्ति समादृत करिष्यन्तीति, अमानितः = असमानितो विद्वान् मन्येत = अवगच्छेत् ।

अनु०–अपमानित होने पर विद्वान को जानना चाहिए कि-शास्त्रज्ञान विहीन, मूर्ख तथा अधार्मिक जीव समादरणीय व्यक्ति का भी सम्मान नहीं करेंगे ।

छायातपयोरिवात्यन्तविरुद्धयोः मानमौनयोः कदापि सामानाधिकरण्यं न भवतीत्याह–

मू०–न वै मानञ्च मौनञ्च सहितौ वसतः सदा
अयं हि लोको मानस्य असौ मौनस्य तद्विदुः ॥४४।



मर्मभेदिनी वै = निश्चयेन, मानञ्च = स्वमाहात्म्यप्रकाशनरूप

लोकसम्मानावाप्तेः कारणभूतं सकामकर्मानुष्ठानम् मौनञ्च = चरमपुरुषार्थावाप्तेरुपयोगिनां तत्त्वहितपुमर्थानां स्वरूपयाथात्म्यपरिशीलनरूपम् मुनेः कर्म यागिचर्येत्यर्थः सदा = सर्वदा, सर्वस्मिन्नपि काले, सहितौ न वसतः = समानाश्रयौ न भवतः। हि यतः, मानस्य = सकामकर्मानुष्ठानस्य फलम् अयम् लोकः = सन्निकृष्टा प्रपञ्चान्तर्गता ब्रह्मादिस्तम्बपर्यन्तव्यापिनी लौकिकी समृद्धिः भवति। मौनस्य = पावनसप्तकानुगृहीतमनसा अविच्छिन्नस्मृतिसन्तानेन परमपुरुषस्वरूपचिन्तनरूपस्य फलम् असौ = विप्रकृष्टः 'त्रिपादस्यामृतं दिवि' इति श्रुत्युक्तो मोक्षो भवति। मानार्थिनाम् मोक्षो दुःसम्पादः, मौनिनाञ्चेहलोको दुस्सम्पाद इत्याशयः।

अनु०—मान ( सकामकर्मानुष्ठान ) तथा मौन ( मोक्ष—प्राप्ति के साधकतम तत्त्व, हित एवं पुरुषार्थों का परमार्थं परिशीलन ) दोनों कभी एक साथ नहीं रहते। मान का फल लौकिक समृद्धि तथा मौन का फल मोक्षाधिगम है।

लौकिकी समृद्धिः मोक्षाधिगमस्य प्रतिबन्धिकेत्याह—

**मू०—श्रीः सुखस्येह संवासः सा चापिपरिपन्थिनी।**
**ब्राह्मी सुदुर्लभा श्रीर्हि प्रज्ञाहीनेन क्षत्रिय ॥४५॥**

मर्मभेदिनी—क्षत्रिय हे धृतराष्ट्र ! इह = लोके धनैश्वर्याभिजनस्वरूपा श्रीः, सुखस्य = लौकिकसमृद्धिरूपस्य संवासः = अधिष्ठानम्, सा श्रीरपि मुमुक्षोः मोक्षाधिगमस्य परिपन्थिनी = योगादीनामनिष्टकारित्वात् प्रतिबन्धिका, हि = यतः, प्रज्ञाहीनेन = विद्याविहीनेन सकामकर्मानुष्ठानजन्येन लौकिकसमृद्धिसम्पन्नेन पुरुषेण, ब्राह्मी श्रीः = 'सोऽश्नुते सर्वान् कामान्सह ब्रह्मणा विपश्चिता' इति श्रुतौ भोगमात्रसाम्य लिङ्गाच्च' (ब्र०सू०४।४।२१) इति सूत्रे च प्रोक्ता आविर्भूतगुणाष्टकस्य ... स्वरूपा, सुदुर्लभा = अत्यन्तदुर्लभा।

नहि कृतेन कर्मणा अकृतो विद्यैकलभ्यो मोक्षोऽधिगन्तुं शक्यते इति हार्दो भावः।

अनु० – धृतराष्ट्र! लौकिक सुख के अधिष्ठानरूप ऐश्वर्य भी-मोक्ष प्राप्ति की प्रतिबन्धिका है। परा विद्या विहीन पुरुष मोक्ष नहीं प्राप्त कर सकता।

मृत्योर्द्वारभूतस्य मोहस्य निरासकानि मोक्षसाधनानि ब्रूते –

मू० द्वाराणि तस्येह वदन्ति सन्तो -बहुप्रकाराणि दुराचराणि।
सत्यार्जवे ह्रीर्दमशौचविद्या,यथा न मोहप्रतिबन्धनानि॥४६

मर्मभेदिनी—तस्य= ब्रह्मसुखस्य प्राप्तेः द्वाराणि= साधकतमानि, इह=लोके दुराचराणि=दुस्सम्पाद्यानि, सत्यार्जवे=यथार्थभाषणं सत्यम्,करणत्रयेण (मनसा-वाचा-कर्मणा च)समानरूपेण कैतव रहित माचरणमार्जवम्। ह्रीः=लोकापवादभयम्। दमः- इन्द्रियनिग्रहः। शौचम्=बाह्याभ्यन्तर शुद्धिः। मृज्जलाभ्याम्, बाह्यशुद्धिः। विवेक-विमोकादीना-मनः शोधनमाभ्यन्तरशुद्धिः। विद्या=पराऽपरा च! अपराविद्यान्तर्गतानां शास्त्राणामध्ययनेन - कर्मणामल्पास्थिरफल-प्रदत्वं ज्ञात्वा परयाविद्यया तत्त्वहितपुमर्थानां स्वरूपयाथात्म्यं ज्ञात्वा मोक्षमधिगच्छति। सत्यार्जवे ह्रीर्दमशौचविद्यारूपाणि बहुप्रकाराणि सन्तः=सज्जनाआत्मस्वरूपयाथात्म्यज्ञातारः वदन्ति। यथा=येन प्रकारेण-अनुष्ठितेषु साधनेषु सत्सु मोहप्रतिबन्धनानि= प्रमादापरपर्यायभूतस्य मोहस्य प्रतिबोधनानि=उपष्टम्भकानि लोभ क्रोधेर्ष्यादीनि न प्रभवन्ति।

अयमाशयः—अध्यायस्यादौ धृतराष्ट्रः मृत्योर्विषये अप्राक्षीत्। सनत् सुजातः 'मृत्युर्नास्तीतिभारत' (म० भा० उ० प०४१।२) इति स्वकीयं मतं बहुधा विवेच्य अध्यायस्यान्ते उपसंहरति मृत्योर्निरासकतत्त्वानां प्रवचनम्।

अनु०-तत्वों के ज्ञाता आचार्यों ने ब्राह्मसुखकी प्राप्ति के साधकतम तथा मोह के प्रतिबन्धकरूप से सत्य, आर्जव, लज्जा, दम ( इन्द्रियों का निग्रह ) वाह्याभ्यन्तरशुद्धि तथा परा अपरा विद्या आदि को बतलाया है ।

इति श्रीमहाभारते उद्योगपर्वणि सनत्सुजातपर्वणि
द्विचत्वारिंशोऽध्यायः
( प्रथमोऽध्यायः समाप्तः )

# अथ त्रिचत्त्वारिंशोऽध्यायः

## ( द्वितीयोऽध्यायः )

पूर्वाध्यायान्ते ब्राह्मी श्रीः सत्यादिषट्कं च मोहात्मकस्य मृत्योः प्रतिबन्धकानीत्युक्तम् । तान्येव विवरीतुमध्यायान्तरमारभते —

धृतराष्ट्र उवाच —धृतराष्ट्र ने कहा

मूल– कस्यैष मौनःकतरन्नुमौनम्–प्रब्रूहि विद्वन्निह मौनभावम् ।
मौनेन विद्वान्नुत याति मौनम् कथं मुने मौनमिहाचरन्ति।।१।।

मर्मभेदिनीः- अस्मिन् श्लोके पञ्च प्रश्नान् पृच्छति धृतराष्ट्रः। तत्र सर्वथा स्वार्थमनपेक्ष्य परमात्मप्रित्यायेव सर्वेषां कर्मणामनुष्ठानमेव न्यासः। न्यासपूर्वक स्वीक्रियमाणो मुनेर्धर्मः मौनः। एष मौनः कस्याधिकारिणो भवति? अथवा कस्य फलस्यकृते भवतीति प्रथमः प्रश्नः। कतरन्नु मौनम्। नुइति वितर्के। 'अथमौनमभाषणम्' (अमरको०२।२।३६) इति कोशोक्तं वागाद्युपरमलक्षणं मौनमित्यभिधीयते। अथवा 'अमौनञ्चमौनञ्च निर्विद्याथ ब्राह्मणः' इति श्रुत्युक्तात् पाण्डित्यबाल्यात् भिन्नम् श्रवणमनन-व्यतिरिक्तम् ध्येयविषयकमविच्छिन्नस्मृतिसन्तानरूपं निदिध्यासनं वा मौन शब्दवाच्यम्। उभयोः वागाद्युपरमनिदिध्यासनयोः कतरत् मौनम्

मृत्युप्रतिरोधकमास्ते ! इति द्वितीयः प्रश्नः ! हे विद्वन् सनत् सुजात स्वाभिमतस्य मृत्युप्रतिरोधकस्य मौनस्य भावं स्वरूपम् प्रब्रूहि" संसारसागरं संतितिषु"मामुपदिश इत्यर्थः । इति तृतीयः प्रश्नः । मौनेन निदिध्यासनरूपेण विद्वान् = आत्मज्ञः मौनम् ॥ यत्र नान्यत् पश्यति नान्यच्छृणोति' इति भूमविद्यायाः श्रुत्या सुश्लोकितमनन्तत्व रूपं 'अवाक्यनादरः' इति श्रुत्याऽभिहितं तत्त्वं याति = प्राप्नोति, तदपि उपदिशतु भवान् । इति चतुर्थः प्रश्नः । हे मुने ! इह लोके आत्मतत्त्वज्ञाः कथं मौनमाचरन्तीति पञ्चमः प्रश्नः । इत्थमत्र पञ्चैव प्रश्नाः कृताः न तु चत्वारः ।

अनु०— हे मुने ! मौन का प्रयोजन क्या है ? अभाषण तथा निदिध्यासन दोनों में कौन मौन शब्द वाच्य है ? आप मुझे मौन का स्वरूप बतलाएँ ? क्या मौन के द्वारा आत्मज्ञ ब्रह्म को प्राप्त कर लेता है ? लोक में आत्मज्ञानी मौन का आचरण कैसे करते हैं ?

पञ्चानामपि प्रश्नानां तन्त्रेणोत्तरमाह (१६७९)

मू० सनत्सुजात उवाच —सनत्सुजात ने कहा-

मू० यतो न वेदा मनसा सहैनमनुप्रविशन्ति ततोऽथमौनम् ।
यत्रोत्थितो वेदशब्दस्तथायं स तन्मयत्वेन विभाति राजन् ॥२॥

मर्मभेदिनी–'यतोवाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुत्यनुसारेण यस्मात् कारणात् एनम् = प्राप्यम् परमात्मानम् सर्वं ज्ञानसाधनैरिन्द्रियैस्साकं वेदाः परमात्मनः स्वरूपरूपादीनामुपदेशकाः यतः = यस्मात् कारणात् न अनुप्रविशन्तिः इदमित्थन्तया कात्स्न्येन नहि विषयी कुर्वन्ति । अन्यथा त्रिविधपरिच्छेदरहितस्यानन्तत्वमेव प्रहीयेत । नचेवं सर्वदोषरहितानां वेदानां तत्त्वार्थानां स्वरूपयाथात्म्यप्रतिपादकत्वमपहीयेत इति वाच्यम्, अनन्तस्य वस्तुनः अकात्स्न्येन प्रतिपादनमेव वेदानां स्वरूपानुरूपमास्ते

आहुश्चाभियुक्ताः– 'यन्नास्त्येव तदज्ञतामनुगुणां सर्वज्ञताया विदुः' इति । ततो हेतो मौनमित्येतन्नामान्वर्थसंज्ञकम् । अयमाशयः– कार्त्स्न्येन वाङ्मनसातीतस्य प्राप्तिः मौनस्य प्रयोजनम् । मौनञ्च निदिध्यासनरूपम् । मौनस्य स्वरूपञ्चसर्वाणीन्द्रियाणि संयम्य साधनसप्तकानुगृहीतेन मनसः ध्येयस्य स्वरूपचिन्तनमेव । तेनैव वाङ्मनसातीतमपि तत्त्वं परब्रह्म क्रमशः विशदविशदतरविशदतमतयाऽन्ततो यथावदपरोक्ष्यते । इति पूर्वार्द्धेन चतुर्णां प्रश्नानामुत्तरं दत्तम् । उत्तरार्द्धेन चाह पञ्चमस्य प्रश्नस्योत्तरम् । यत्र यस्मिन्नेवपरस्मिन् ब्रह्मणि कल्पस्यादौ 'यस्य निःश्वसितं वेदाः' इति सूक्त्यनुसारेण वेदशब्दाः अयम् लौकिकः शब्दश्च उत्थितः = प्रादुर्भूतः । राजन् = धृतराष्ट्र ! सः = भूतात्मा तन्मयत्वेन विभाति । परमात्मनः सर्ववेद वेद्यत्वात् । वेदाः, वेदमाता, वेदसारश्च प्रणवः परमात्मन एव स्वरूपादीनां प्रतिपादन कुर्वन्ति ।

अनु०–मन आदि सभी इन्द्रियों तथा वेदों के पूर्ण रूप से अविषय ब्रह्म को मौन अन्वर्थसंज्ञा है। कल्पके प्रारम्भमें ब्रह्म सेही लौकिक एवं वैदिक शब्द उत्पन्न होते हैं; अतएव ब्रह्म शब्दमय है।

अत्र धृतराष्ट्रः शंकते–यदि वेदशब्दमयं ब्रह्म । तर्हि मौनहीनोऽपि वेदज्ञो ब्राह्मणः पापेन कर्मण लिप्यते न वा ?

मू०–धृतराष्ट्र उवाच—धृतराष्ट्र ने कहा—

ऋचो यजूंषि यो वेद सामवेदं च वेद यः ।
पापानि कुर्वन् पापेन लिप्यते किं न लिप्यते ? ॥३॥ १६७८

मर्मभेदनी–यदि वेदशब्दमय ब्रह्म तर्हि यः–वेदाभ्यास परायणः पुरुषः, ऋचः = ऋग्वेदम् यजूंषि = यजुर्वेदम्, च = तथा सामवेदम् वेद सम्यग्रूपेण अर्थावगतिपुरस्सरम् अष्टप्रकारकैः जटा-

मालाशिखारेखादिभिः पाठैः सह जानाति सः किम्? पापानि पापाऽदृष्टजनकानि कर्माणिकुर्वन् पापेन कृतेन कर्मणा लिप्यते न वा? वेदानां ब्रह्मस्वरूपत्वात् 'यथेषिकातूलमग्नौप्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति श्रुत्यनुसारेण ब्रह्मज्ञः पुरुषः कृतेन कर्मणा न लिप्यते। तर्हि वेदेज्ञानापि कर्मबन्धविनिर्मुक्तेन भाव्यमिति शंकायाः मूलम्।

अनु०–ऋग्वेद, यजुर्वेद, एव सामवेद का ज्ञाता पुरुष अपने किए हुए पापकर्मों के बन्धन में बँधता है, अथवा नहीं?

सततं वेदाभ्यासपरायणोऽपि पुरुषः स्वकृतस्य पापकर्मणः फलमवश्यमश्नुते—

सू०–सनत्सुजात उवाच—सनत् सुजात ने कहा–

मू० नैनं सामान्यृचो वापि न यजूंष्यविचक्षणम्।
त्रायन्ते कर्मणः पापान्न ते मिथ्या ब्रवीम्यहम् ॥४॥

मर्मभेदिनी–एनम् अविचक्षणम् = अनात्मज्ञम् निषिद्धाचारपरायणमनात्मज्ञम् पुरुषम् नसामानि = नहिसामवेदो नवा ऋचः = नतु ऋग्वेदः, नवापि यजूंषि = नवाअध्वर्युर्वेदः इमे सर्वे पापात् कर्मणः = देहेन्द्रियमनः प्राणेषु रममाणत्वात् मोहादनुष्ठितात् पापादृष्टजनकात् कर्मणः; न त्रायन्ते = नहि रक्षां कुर्वन्ति। अहम् ते मिथ्या नहि ब्रवीमि = वच्मि। वदन्ति च कृतानां कर्मणां फलानामवश्यभोक्तव्यताम्–'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इत्यादिना।

अनु०–मैं तुम से मिथ्या नहीं कहता। पाप कर्मों से अनात्मज्ञ पुरुष की रक्षा ऋग्वेद, यजुर्वेद अथवा सामवेद नहीं कर सकते ॥४॥

वेदाः अनात्मज्ञं पुरुषमन्तकाले त्यजन्ति–



मू० नच्छन्दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्तमानम्।

नीडं शकुन्ता इव जातपक्षाश्छन्दांस्येनं प्रजहत्यन्तकाले ॥५॥

मर्मभेदिनी—मायया = कापट्यपूर्णेन व्यवहारेण वर्तमानम् मायाविनम् = पापाचारपरायणम् एनम् = वेदाभ्यासपरायणमपि पुरुषम् छन्दांसि = वेदाः, वृजिनात् = पापात् नहि तारयन्ति जातपक्षाः = उद्भूतपक्षवन्तः शकुन्ताः = पक्षिणः, नीडमिव = येन प्रकारेण कुलायं विहाय उत्पतन्ति तेनैव प्रकारेण एनम् = अनात्मज्ञम् पुरुषम्, छन्दांसि = वेदाः, अन्तकाले शरीरपातकाले, प्रजहति = त्यजन्ति।

अनु०—कपट पूर्ण व्यवहार करने वाले मायावी पुरुष की पाप से रक्षा वेद नहीं कर सकते हैं। जिस तरह पङ्ख जम जाने पर पक्षी नीडको छोड़ देते हैं उसी तरह मृत्युकाल में वेद वेदज्ञ पुरुष का त्याग कर देते हैं।

वेदाध्यायिनस्त्राणेऽप्रभवतो वेदस्य 'स्वाध्यायोऽध्येतव्यः' इत्यादीनि वचांसि मुधैवाध्ययनविधिं प्रतिपादयन्ति किम् ? इति शंकते—

मू०—धृतराष्ट्र उवाच— धृतराष्ट्र ने कहा -

मू०—न चेद्वेदा विना धर्मं त्रातुं शक्ता विचक्षण।

अथ कस्मात्प्रलापोऽयं ब्राह्मणानां सनातनः ॥६॥ (१९८०)

मर्मभेदिनी—विचक्षण = तत्त्वहितपुमर्थानां स्वरूपयाथात्म्यकोविद ! सनतसुजात चेद्‌द = यदि ब्राह्मणानां स्वाभाविकं धर्मं विना वेदाः = ऋग्यजुस्सामाथर्वाणः वेदाभ्यासपरायणम् पुरुषम् त्रातुम् = रक्षितुम् शक्ता न = समर्था नहि भवन्ति आह च मनुः—ब्राह्मणानां स्वाभाविकम् धर्मम्—शमोदमस्तपश्शौचं क्षान्तिरार्जवमेवच। ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्मस्वभाविकम्।' इत्यादिना नान्येन....... नहि, अयम् = वेदाभ्यसनरूपः ब्राह्मणानाम् सना-

तनः = शाश्वतिकः धर्मः आस्ते इति 'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयेत्' 'स्वाध्यायोऽध्येतव्यः' 'यावतीर्वै देवतास्तास्सर्वाः वेदविदि ब्राह्मणे वसन्ति' स्वाध्याय प्रवचने एवेति नाको मौदगल्यः' 'तद्धितपस्तद्धितपः' 'स्वाध्यायप्रवचनाभ्यां मा प्रमदितव्यम्'। 'ऋग्यजुस्सामभिः पूतो ब्रह्म लोके महीयते।इत्यादिकानां श्रौतस्मार्त वचसां प्रालापः कस्मात् कारणाज्जागर्तितराम् ?

अनु- यदि स्वाभाविक ब्रह्म कर्म के अभाव में वेदाध्यायी की रक्षा वेद नहीं कर पाते तो फिर वेदाध्ययन को ब्राह्मणों का सनातन धर्म क्यों कहा जाता है ? अत्र समवत्ते --

मू० सनत्सुजात उवाच— सनत्सुजात ने कहा-

मू० तस्यैव नामादिविशेषरूपैरिदं जगद्भाति महानुभाव।
निर्दिश्य सम्यक् प्रवदन्ति वेदास्तद्विश्ववैरूप्यमुदाहरन्ति ॥७

मर्मभेदिनी – महानुभाव ! हे धृतराष्ट्र प्रलयकाले नामरूप विभागानर्हत्वादव्यक्तमिदं जगत् सृष्टिकाले समुत्पन्नो 'अस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदो यजुर्वेदःसामवेदः' इत्यादि श्रुतेः यस्य निःश्वासोऽयं सम्पूर्णो वेदः तस्यैव परमात्मनः जगद्रूपेण परिणतस्य, नामरूपात्मना व्याकृतस्य नामादिविशेषरूपैः विभाति = प्रकाशते। वेदाः – 'द्वे वाव ब्रह्मणो रूपे मूर्तञ्चामूर्तञ्च' इत्यादिना सम्पूर्णं जगत् ब्रह्मरूपत्वेन निर्दिश्य सम्यक प्रवदन्ति जगतो ब्रह्मरूपताम्। किञ्च – श्रुतिर्नेतिनेति "इत्यादिना ब्रह्मणः रूपस्येयत्तां प्रतिषिद्ध्य तस्य विश्वसमवात् जगतो वैलक्षण्यमुदाहरन्ति नच नेति नेति इति श्रुत्या मिथ्याभूतात् मूर्तामूर्तात्मकात् जगतः तस्य ब्रह्मणो वैरूप्यम् पारमार्थ्यम् उदाहरन्ति = वदन्ति श्रुतयः इति तात्पर्यम्। अज्ञानाद्विपर्ययेण दूरदर्शनम् वर्त्म इति ...

जगतो मूर्तामूर्तात्मकत्वं प्रतिपाद्य निषेधापेक्षया, मूर्तामूर्तात्मकतायाः अप्रतिपादनमेववरम् असीत्। अतएव कथं मातापितृभ्योऽपि वत्सलतरा श्रुतिः इत्थं प्रमत्तामिव प्रलपेत्। अतएव नेति नेति' इति श्रुतेः ब्रह्मरूपस्येयत्तायाः प्रतिषेधे एव तात्पर्यमाकलनीयम् ॥७॥

अनु० महानुभाव ! धृतराष्ट्र ! जिस परमात्मा के निःश्वास वेद हैं उसके ही नाम, रूप आदि विशेषों के द्वारा यह जगत् प्रकाशित होता है। वेद उस ब्रह्म का ही निर्देश करके सम्यक् उपदेश करते हुए ब्रह्म को सम्पूर्ण जगत् से विलक्षण बतलाते हैं ॥७॥

इदानीमात्मज्ञानं विना मोक्षो नहि भवतीतिप्राह —:

मू० तदर्थमुक्तं तपएतदिज्या ताभ्यामसौ पुण्यमुपैति विद्वान् ॥
पुण्येन पापं विनहत्यपश्चात् सञ्जायते ज्ञानविदीपितात्मा ॥८॥

मर्मभेदिनी— तस्य ब्रह्मणः प्राप्त्यर्थमेव एतत् तपः = कृच्छ्रचान्द्रायणादिकम् उक्तम्, इज्या = यज्ञादिकञ्च ताभ्याम्- कृच्छ्रचान्द्रायणेन यज्ञादिना च असौ विद्वान्कृच्छ्रचान्द्रायणपरायणः पुण्यमुपैति लभते। सः पुण्येन = पुण्यादृष्टजनकेन कर्मणा पापम् विनिहत्य = विनाश्य। 'तपसा कल्मषं हन्ति' इति वाक्यमपि तपसः पापप्रणाशकत्वं समर्थयति। पश्चात् = तदनतरम् ज्ञानविदीपितात्मा- तत्त्वयाथात्म्यज्ञानेन विदीपितः प्रकाशितः आत्मा अन्तःकरणं यस्याऽसौ सञ्जायते सच्छब्द वाच्यस्य परमात्मनः 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति श्रुत्यनुसारेण भागमात्रसाम्यमवाप्य तत्स्वरूपो भवति।

अनु०—तपस्या, यज्ञआदि तो परमात्मप्राप्ति के साधन हैं। इन सबों के द्वारा वेदाध्यायी पुण्य प्राप्त करते हैं। पुण्य के द्वारा पापोंका प्रणाश करके आत्मज्ञानी मुक्त होजाते हैं।

आत्मज्ञानं विना संसारचक्रं न निवर्त्तते इति दिशति—

सू०— ज्ञानेन ह्यात्मानमुपैति विद्वानथान्यथा वर्गफलानुकांक्षी।
अस्मिन् कृतं तत्परिगृह्य सर्वममुत्रभुक्त्वा पुनरेति मार्गम् ॥९॥

मर्मभेदिनी—'भोक्ताभोग्यं प्रेरितारञ्च मत्वा' 'तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्यादिकाः श्रुतयः तत्वज्ञानात्परं किञ्चन्नास्तीति प्रतिपादयन्ति। अनेन ज्ञानेनैव विद्वान् आत्मानम्—परमात्मानमुपैति = प्राप्नोति। अथ = पक्षान्तरे अन्यथा = तत्त्वहितपुमर्थानां ज्ञानाभावे, वर्गफलानुकांक्षी = धर्मार्थकामानामभिलिप्सुः भवति शब्दादिभोगविषयिण्या बुद्धया युक्तत्वात्। अतएव सः अस्मिन् लोके कृतमनुष्ठितं यत् यत् कर्म तत् तत् सर्वम् परिगृह्य अमुत्र = स्वर्गनरकादिलोकेषु सुख दुःखरूपम् फलंभुक्त्वे। क्षीणे पुण्ये मर्त्यलोके विशन्ति' इत्युक्तदिशा समाप्तेषु कर्मभोगेषु पुनः प्राचीन संस्कारवशात् सदसद्योनिरूपं मार्गम् आयाति। पुनः संसारचक्रे भ्रमतीत्यर्थः श्रुतिरप्याह = छान्दोग्योपनिषदः पञ्चमे— 'तस्मिन् यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते।

अनु०—तत्त्वज्ञानी पुरुष परमात्मा को प्राप्त कर लेता है। तत्त्वज्ञान के आभाव में विषयोपभोग की कामना से युक्त वह अपने किये हुए सभी कर्मों का फल ( सुख दुःख ) स्वर्गादिलोकों में भोग कर पुनः संसारचक्र में पड़ जाता है।

अथ स्यात् यदि तत्त्वज्ञानं विना तरति मृत्युम् तर्हि स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः। तद्धितपस्तद्धितपः' इत्यादौ वेदाध्ययनस्य तपस्त्वमादरातिशयेन कथं प्राह श्रुतिः? अत्रोच्यते—

सू०—अस्मिंल्लोके तपस्तप्तं फलमन्यत्रभुज्यते ॥
ब्राह्मणानामिमे लोका घोरे तपसि तिष्ठताम् ॥१०॥

मर्मभेदिनी—अनधिगतविद्येन पुरुषेण अस्मिन् लोके तप्तमनुष्ठितम् कृच्छ्रचान्द्रायणादिकं यद्धितपः तस्य स्वर्गादिलोकेषु स्वर्गीयसुखावाप्तिरूपं फलम् अन्यत्र परस्मिन् लोके भुज्यते । धात्वे = [illegible]सि ब्राह्मणानां स्वाभाविकधर्मानुष्ठानरूपे तपसि तिष्ठताम् = विद्यमानानाम् ब्राह्मणानाम् = समधिगतविद्यानाम् पुरुषाणां तु इमे लोका एव सर्वविधपुण्यापुण्यविमोकरूपफलप्रदाः भवन्ति । लभते च स विद्वान् तेनैव मोक्षः । 'वृद्धे तपसीति पाठेऽपि स्पष्टोऽर्थः ।

अनु०—अनात्मज्ञ पुरुष अपने कृच्छ्र चान्द्रायणादिक तपस्या का फल स्वर्गादि लोकों में प्राप्त करता है । ब्राह्मणों के स्वाभाविक धर्मानुष्ठान का फल आत्मज्ञपुरुष इस लोक में ही प्राप्त कर लेता है ।

एकमेव तपस्तप्तं विदुषे मोक्षरूपमविदुषे स्वर्गरूपञ्च फलं कथम् ददातीति शंकते-धृतराष्ट्रः ।

**धृतराष्ट्र उवाच—धृतराष्ट्र ने कहा-**

**कथं समृद्धमसमृद्धं तपो भवति केवलम् ।**
**सनत्सुजात तद्ब्रूहि यथा विद्यामतद्वयम् ॥११॥**

मर्मभेदिनी—हे सनत्सुजात् केवलमेकमेव तप्तम् तपः कथम् = केन प्रकारेण समधिगतविद्याय पुरुषाय समृद्धम् = अविदुषे पुरुषाय असमृद्धञ्च भवति । तत्-फलभेदस्यकारण ब्रूहि = उपदिश । यथा येन प्रकारेण वयम् तद्द्वयम् = द्विप्रकारकस्यफलप्रदानस्य बीजं विद्याम ।

अनु०—महर्षे सनत्सुजात ! एकही तप अनात्मज्ञ के लिए असमृद्ध तथा आत्मज्ञ को समृद्ध फल देता है; इसे इस प्रकार से बतलायें कि हम फलों के भेदक कारण को जान सकें ।

अत्र समाधत्ते—

सनत्सुजात उवाच—सनत्सुजात ने कहा०—
निष्कल्मषं तपस्त्वेतत् केवलं परिचक्षते ।
एतत् समृद्धमप्यृद्धं तपो भवति केवलम् ॥१२॥(१६८१)

मर्मभेदिनी—एतत् निष्कल्मषं—दम्भमोहादिरहितम् श्रद्धादि सहितम् शुद्धम् तप्तं तपः केवलम् = कैवल्यसाधकम् इति। यत्र स्थितो जीवः, एकान्ते अवस्थाय परया विरहिता स्वसौन्दर्यमात्रं दर्पणे विलोक्य प्रहृष्यन्ती नारीव, स्वस्वरूपमात्रस्यानुभवं करोति; एतत् केवलं तपः श्रद्धादिपूर्वकं कुर्वते विदुषे पुरुषाय समृद्धम् भवति। तथा च श्रुतिः—'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेववीर्यवत्तरम्।' इति। दम्भमोहादिपूर्वकं तपस्तप्यमानं = तु तदेव तपः ऋद्धम् भवति ॥१२॥

दोषरहित अनुष्ठित तप कैवल्य का साधक है। वह तप ज्ञानियों के लिए समृद्ध तथा दम्भी आदि अज्ञानियों के लिए केवल ऋद्ध होता है ।।१२।।

तप एव प्रशंसति—

मू०—तपोमूलमिदं सर्वं यन्मां पृच्छसि क्षत्रिय ॥
तपसा वेदविद्वांसः परंत्वमृतमाप्नुयुः ॥१३॥

मर्मभेदिनी—क्षत्रिय = हे धृतराष्ट्र, इदंसर्वम् = ऐहिकामुष्मिकं सम्पूर्णं भोग्यजातम्, यत् त्वम् मां पृच्छसि, = प्रश्नायसे तत् सर्वं तपोमूलम् = निष्कल्मषेण तपसा लभ्यम् वर्तते । वेदविद्वांसः = वैदिकाः तपसः अनुष्ठानेनैव परममृतम् = मुक्तिम्, आप्नुयुः = प्राप्नुयुः ।

अनु०—धृतराष्ट्र! ये सभी ऐहिक एवं आमुष्मिक भोग्य वस्तुएँ तपोलभ्य हैं। वेदज्ञों ने तपस्या से ही मुक्ति प्राप्त किया।

उपरि सनत्सुजातेन निष्कल्मषस्य तपसः फलम् मुक्तिं यावदुक्तम् । नास्ति कल्मषो यस्मि। इत्येव हि निष्कल्मषशब्दस्य व्युत्पत्तिः । अतएव धृतराष्ट्रः तपसः कल्मषान् पृच्छति ।

धृतराष्ट्र उवाच—धृतराष्ट्र ने कहा—

कल्मषं तपसो ब्रूहि श्रुतं निष्कल्मषं तपः ।
सनत्सुजात येनेदं विद्यां गुह्यं सनातनम् ॥१५॥

मर्मभेदिनी—हे सनत्सुजात मया भवताप्रोक्तं निष्कल्मषम्= निष्पापं तपः मोक्षाय भवतीति श्रुतम् । अतएव मह्यम् तपसः कल्मषम् =पापम् ब्रूहि, येन पापेन रहितं तत् निष्कल्मषं भवति। येन अनुष्ठितेन तपसा अहम् गुह्यम् रहस्यात्मकम् सनातनम् = ब्रह्मतत्त्वम् विद्याम् ॥१४॥

अनु०–हे सनत्सुजात ! आप मुझे निष्कल्मष तपस्या के कल्मष को बताएँ जिससे मैं निष्कल्मष तप का अनुष्ठान कर परब्रह्म को जान सकूँ ॥ १४॥

अत्र समाधत्ते—

सनत्सुजात उवाच—सनत्सुजात ने कहा—

क्रोधादयो द्वादश यस्य दोषास्तथा नृशंसानि दशत्रि राजन् ।
धर्मादयो द्वादशैते पितॄणांशास्त्रे गुणा ये विदिता द्विजानाम् ॥१५

मर्मभेदिनी—राजन् = धृतराष्ट्र ! यस्य तपसः क्रोधादयः = अनुपदं वक्ष्यमाणाः द्वादश = द्वादशानां गणः दोषाः सन्ति तथा दशत्रि = त्रयोदशसंख्याकानि, नृशंसानि = अष्टादशोनविंशत्योः श्लोकयोरुक्तानि हिंस्राणि सन्ति । 'विकत्थनः स्पृहयालुः' इत्यादि श्लोकच्छेदकाः आधुनिकाः 'दशत्रि' इत्यस्य स्थाने 'चसप्त' इति

सर्वान् दोषान् वर्जयेत् तपस्वी। किञ्च धर्मादयो ये द्वादशसंख्याकाः दोषाः सन्ति ते पितृणां मन्वादीनाम् शास्त्रे = मनुस्मृत्यादौ द्विजानाम् = ब्राह्मणानाम्, गुणरूपेण विदिताः। पितृणां स्थाने आततानां इत्यपिपाठः।

अनु०—राजन्! जिस तप के क्रोध आदि बारह दोष तथा तेरह नृशंसवर्ग हैं। दोषों तथा नृशंसों से रहित ही तप मोक्ष का साधन है। धर्म आदि बारह मनुस्मृति आदि में द्विजातियों के गुण बतलाये गये हैं।

तत्र सर्वप्रथमं द्वादशदोषानाह—

क्रोधः कामो लोभ मोहौ विधित्साऽकृपासूये मानशोकौ स्पृहा च।
ईर्ष्या जुगुप्सा च मनुष्यदोषा वर्ज्याः सदा द्वादशैते नराणाम्॥१६

क्रोधः = इच्छाप्रतिघातजन्यः आक्रोशताडनादेर्हेतुभूतोमनस्तापः। कामः = स्त्र्यभिलाषः। लोभः = धनव्ययभीरुत्वम्। मोहः = कृत्याकृत्यविवेकराहित्यम्। विधित्सा = उत्तरोत्तरलाभे पिपासा अतृप्तिः। धेट् पाने इत्यस्य रूपम्। अकृपा = दयाराहित्यम्। असूया— परगुणेषु दोषदर्शनम्। मानः = आत्मनि श्रेष्ठताबुद्धिः। शोकः—पुत्रादिनाशे मनसो वैक्लव्यम्। स्पृहा = भोग्येष्वादरः। ईर्ष्या—परोत्कर्षासहिष्णुता। जुगुप्सा—परनिन्दा। इमे द्वादश मनुष्यदोषाः अतएव योगिनामयोगिनाञ्च सर्वेषां कल्याणकामिनां कृते इमे सदा वर्ज्याः सन्ति॥

अनु०—क्रोध, काम, लोभ, मोह, विधित्सा, अकृपा, असूया, मान शोक, स्पृहा, ईर्ष्या, जुगुप्सा ये मानवमात्र के दोष हैं। कल्याण कामियों को इनको त्याग देना चाहिये।

एतेषु द्वादशदोषेषु एकोऽपि दोषः मनुष्याणां नाशने समर्थः किमुत कतिपये सर्वे वा?



एकैकः पर्युपास्तेह मनुष्यान् मनुजर्षभ!

लिप्समानोऽन्तरं तेषां मृगाणामिव लुब्धकः ॥१७॥ १६७७

मर्मभेदिनी-मनुजर्षभ = राजन्धृतराष्ट्र ? मृगाणाम् = वन्यपशूनाम्, अन्तरम् = असावधानताम् लिप्समानः = कामयमानः, लुब्धकः = मृगयुरिव एतेषु द्वादशसंख्याकेषु दोषेषु एकैकः = प्रत्येकम् सर्वे इति यावत् तेषाम् = मनुष्याणाम् छिद्रमन्विष्यमाणाः मनुष्यान् पर्युपास्ते = आश्रयन्ते । यथा लुब्धकः वन्यान् जीवान् असावधानान् प्रेक्ष्य वान् हन्ति तथैव क्रोधादय अपि असन्मार्गेप्रवृत्तान् जीवान् घ्नन्ति ।

अनु० जिस तरह शिकार को असावधान देखकर शिकारी उसे मार डालता है उसी तरह, ये दोषभी प्रमादी पुरुष को नष्टकर देते हैं ।

अथ हिंस्राण्याह द्वयोः श्लोकयोः—

मू० विकत्थनः स्पृहयालुर्मनस्वी विभ्रत्कोपं चपलोऽरक्षणश्च ।
एतान् पापाः षण्नराः पापधर्मान् प्रकुर्वते नोत्रसन्तः सुदुर्गे ॥

मर्मभेदिनी—विकत्थनः-परगुणाक्षेपेण स्वगुणोत्कर्षाभिधानशीलः । स्पृहयालुः-अतियत्नपूर्वकं परस्त्र्यादिभोगेच्छावान् । मनस्वी = गर्वातिशयात् परावमानशीलः । विभ्रत्कोपम् = निमित्तं विनाऽपि सदाकोपपरः । चपलः = अस्थिरः । अरक्षणः = सत्यामपिशक्तौ स्वीकृत स्त्र्यादेः पालनमकुर्वन् । एतान् षट् पापधर्मान् सुदुर्गे = महासंकटेऽपि नोत्रसन्तः = त्रासमकुर्वन्तः पापाः = पापिनो नराः प्रकुर्वते ।

अनु०—विकत्थन (दूसरों की निन्दा तथा अपनी झूठीप्रशंसा करने वाला )स्पृहयालु, मनस्वी, क्रोधी, चंचल तथा अपने आश्रितों की रक्षा नहीं करने वाले इन छह पाप कर्मोंको पापी मनुष्य करते हैं

किञ्च—



मू०—सम्भोगसंविद्विषमोऽतिमानी दत्त्वानुतापी कृपणो बलीयान् ।

वर्गप्रशंसी वनितासु द्वेष्टा एते परे सप्तनृशंसवर्गाः ॥१९॥

मर्मभेदिनी–सम्भोगः स्त्र्यादिसंगः तद्विषयिण्या संविदा विषमः दुर्व्यवस्थितः। अतिमानी = दर्पातिशयेनयुक्तः। दत्तानुतापी = दानं कृत्वाऽपि मम धनं नष्टमिति शोचयित्वा यः दुःखमनुभवति। वलीयान्कृपणः = अत्यन्तकृपणः। वर्जयति स्वरूपात् प्रच्यावयतीति वर्गः शब्दादिविषयाणाम् समूहः तस्य प्रशंसी = ऐन्द्रियिकसुखोपभोगपरायणः वनितासु पाणिगृहीतानाम् पत्नीनाम् विषये, द्वेष्टा = द्वेषबुद्धियुक्तः तेएते = इमे सप्त,परे = पूर्वोक्ताःषट्च संयोज्य त्रयोदशसंख्याकाः नृशंसवर्गाःसन्ति

अनु०–कामी अत्यन्तदृप्त,दान देकर पछिताने वाले, अत्यन्त कृपण ऐन्द्रियिक सुखों के भोग में लगे रहने वाले,तथा अपनी पत्नियों से द्वेष करने वाले ये सात तथा पूर्वोक्त छह सभी (तेरहो)नृशंस हैं।

धर्मादीनि द्विजातीनां द्वादशव्रतानि उपदिशति––

सू०—धर्मश्च सत्यं च दमस्तपश्चामात्सर्यं ह्रीस्तितिक्षाऽनसूया।
यज्ञश्चदानं च धृतिः श्रुतं च व्रतानिवै द्वादश ब्राह्मणस्य ॥२०॥

मर्मभेदिनी–धर्म-तेभ्यस्तेभ्यो वर्णाश्रमेभ्यो विहिताः नित्यनैमित्तिकादयो धर्माः, सत्यम्–हिंसावर्जं यथार्थभाषणम् दमः = इन्द्रियाणां निग्रहः। तपः–कृच्छ्रचान्द्रायणादिकानामाचरणम्। अमात्सर्यम् –परगुणेष्वसहिष्णुता मत्सरः, तेन रहितता। ह्रीः = लज्जा। तितिक्षा = सुखदुखादीनाम् सहिष्णुता। अनसूया–परगुणेषु दोषाविष्करणमसूया तदभावः। यज्ञः–ज्योतिष्टोमादिः। दानम्। धृतिः अःप्रन्नावपि व्रतादेरत्यागः। श्रुतम्-अर्थानुसंधानपूर्वकं वेदाध्ययनम्। वै = निश्चयेन इमानिद्वादशसंख्याकानि, ब्राह्मणस्य = मुमुक्षोः, व्रतानि सन्ति।



अनु०–धर्म, सत्य, दम, तप, अमात्सर्य, लज्जा, तितिक्षा,

अनसूया, यज्ञ, दान, धैर्य और वेदाध्ययन, ये मुमुक्षुओंके द्वादशव्रत हैं।

उपर्युक्तेभ्यो गुणेभ्यो युक्तो ब्राह्मणः सर्वबन्धविनिर्मुक्तो भवतीत्याह–

मू०–यस्त्वेतेभ्यः प्रभवेद् द्वादशेभ्यः, सर्वामपीमां पृथिवीं स शिष्यात्,
त्रिभिर्द्वाभ्यामेकतो वाऽर्थितो यस्तस्य स्वमस्तीति संवेदितव्यः॥२१

मर्मभेदिनी–यः ब्राह्मणः एतेभ्यो द्वादशगुणेभ्यो युक्तो भवति सः इमाम् सर्वाम् = सम्पूर्णाम्—पृथिवीं शिष्यात्। सम्पूर्णस्य जगतः प्रशासने समर्थो भवितुमर्हति। श्रुतिरप्याह–"यस्तमात्मानमनुविद्य विजानाति सः सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्॥" इति यः पुरुषः एतेषु द्वादशगुणेषु एकेन, द्वाभ्याम्, त्रिभिर्वा गुणैः युक्तो भवति तस्य पुरुषस्य स्वम् = वित्तम् मोक्षप्राप्त्युपयोगि गुण-स्वरूपमित्यर्थः, अस्तीति वेदितव्यः = विद्यादित्यर्थः।

अनु०–उपर्युक्त बारह गुणों से युक्त पुरुष सम्पूर्ण पृथिवी का प्रशासन कर सकता है। इनमें से एक दो अथवा तीन गुणों से युक्त पुरुष भी मोक्षोपयोगी सम्पत्ति से युक्त है, यह जानना चाहिये।

दमादीनां साक्षान्मोक्षसाधनत्वमाह–

मू०–दमस्त्यागोऽप्रमादश्च एतेष्वमृतमाहितम्।
तानि सत्यमुखान्याहुर्ब्राह्मणा ये मनीषिणः॥२२॥

मर्मभेदिनी–दमः–जितेन्द्रियत्वम्, त्यागः–फलाभिसन्धिं विहाय परमात्मन एव मुखोल्लासार्थंकर्मणामनुष्ठानम्। अप्रमादः = सततं तत्त्वहितपुमर्थानां स्वरूपयाथात्म्यचिन्तनम्। एतेषु त्रिषु साधनेष्वेव अमृतम् = मोक्षः आहितम् = स्थितः। इमानि त्रीणि साधनानि साक्षान्मोक्षफलानि सन्तीति वक्तुराशयः ये मनीषिणः तत्त्वज्ञा ब्राह्मणास्सन्ति ते आहुर्यत् एतानि दमादीनि सत्यमुखानि = सत्य-प्रधानान्येव मोक्षप्रदानि भवन्ति॥

अनु०–तत्त्वज्ञ ब्राह्मणों का कहना है कि सत्यप्रधान दम, त्याग तथा अप्रमाद मोक्षके साक्षात् साधन हैं।

अनुपदं वक्ष्यमाणैरष्टादशदोषैर्विरहितोदमोऽष्टादशगुणैस्सहितस्स्यादित्याह—

मू०—दमोह्यष्टादशगुणः प्रतिकूलंकृताकृते ।
अनृतं चाभ्यसूया च कामार्थौ च तथा स्पृहा ॥२३॥
क्रोधश्शोकस्तथातृष्णा लोभः पैशुन्यमेव च ।
मत्सरश्च विहिंसा च परितापस्तथाऽरतिः ॥२४॥
अपस्मारश्चातिवादस्तथा सभावनात्मनि ।
एतैर्विमुक्तोदोषैर्यः स दान्तः सद्भिरुच्यते ॥२५॥

मर्मभेदिनी–निम्नांकितैर्दोषैर्विमुक्तो दमः अष्टादशगुणैस्सम्पन्नो भवति। एतेषां दोषाणां त्याग एव गुणरूपेण पृथक्-पृथक् परिणमते। तथाहिकृताकृतेप्रतिकूलम्–कृते वैदिककर्मणि प्रतिकूलमश्रद्धा, अकृते च उपवासव्रतादौ प्रतिकूलं क्षुधा जिह्वालौल्यादिः। अस्य परित्यागेन विहितकर्मानुष्ठाने श्रद्धा समुपजायते। अनृताभ्यसूययोः परित्यागेन–दमः सत्यानसूयाभ्यां सम्पन्नो भवति। स्त्र्यभिलाषरूपस्य कामस्य परित्यागेन ब्रह्मचर्ययुक्तो भवति दमः। धनार्जनेऽतियत्नरूपस्यार्थस्य परित्यागेन लब्धेष्वेववस्तुषु सन्तोषो भवति। धनाद्यभिलाषाख्यया स्पृहया रहितो दमः निस्पृहो भवति। क्रोधत्यागेनाक्रोधो जायते। 'न मे किञ्चिन्न दह्यति' इत्याकारिका बुद्धिर्भवतिशोकेन रहिता। तृष्णया रहितो दान्तः ऐहिकामुष्मिकफलभोगाद् विरक्तो भवति। पथिस्थिततृणलोष्ठादिवन्मनुते निर्लोभो दान्तः। पैशुन्येनहीनोदान्तो परदोषान्न पश्यति। मत्सरस्य त्यागेनामात्सर्यमायाति दान्ते। हिंसायाः परित्यागेन सर्वभूतेषु वैरभावो

भवति। परितापाभावे दान्तः सर्वदात्मचिन्तनम् कुरुते। अरत्यासः मानापमानयोः हर्षशोकौ जहाति। कर्तव्यविस्मरण रूपमपस्मारं विहाय सः विद्याप्राप्ति यावत् सावधानतया विहितमनुष्ठाय शास्त्रोक्त दिशा मोक्षावाप्तये यतते। पराक्रोशेन रहितो दान्तो सर्वेषु दयते। सम्भावना च महत्त्वुद्धिः। अनया रहितो दान्तः कुत्रापि स्वमाहात्म्यं नहि प्रकाशयति। एभिरष्टादशदोषैर्विरहित एव दान्तः सद्भिः सम्माननीयो भवति दमस्याष्टादश गुणयुक्तत्वात्।

अनु०-(१) किए हुए यज्ञदानादि के विषय में अश्रद्धा तथा जिह्वालौल्य आदि के कारण उपवास आदि न करना, (२) असत्य भाषण, (३) असूया, (४) काम (५) अर्थ (६) स्पृहा (७) क्रोध (८) शोक (९) तृष्णा (१०) लोभ (११) पैशुन्य (१२) मत्सर (१३) विहिंसा (१४) परिताप (१५) अरति (१६) अपस्मार (१७) अतिवाद तथा (१८) संभावना। इन अठारह दोषों के त्याग से दम क्रमशः (१) श्रद्धा (२) सत्य (३) अनसूया (४) ब्रह्मचर्य (५) सन्तोष (६) निस्पृहा (७) अक्रोध (८) अशोक (९) ऐहिकामुष्मिकफलभोग विराग (१०) निर्लोभ (११) परदोषानवेक्षण (१२) अमात्सर्य (१३) सभी जीवों को प्रति निर्वैर (१४) सततात्मचिन्तन (१५) विद्या प्राप्ति काल पर्यन्त आत्मतत्त्वचिन्तन (१६) दया (१७) निगूढाचरण (१८) इन अठारह गुणों से युक्त हो जाता है। अतएव उपर्युक्त दोषों से रहित दान्त मुमुक्षु का ही तत्त्वज्ञ पुरुष सम्मान करते हैं।

गर्वापरपर्यायस्य मदस्य नाशकानष्टादशमददोषान्नाह-

मू०-मदोऽष्टादशदोषस्स्यात् त्यागो भवति षड्विधः।
विपर्यया स्मृता ह्येते मददोषा उदाहृताः ॥२६॥

मर्मभेदिनी-मदस्याष्टादशदोषा भवन्ति त्यागश्च षट्प्रकारको भवति। येषामष्टादशदोषाणां परित्यागेन श्रद्धादिभिरष्टादशगुण-

त्समन्वितो भवति, दमः, ते गुणा एव मदस्य दोषास्सन्ति । श्रीनी-लकण्ठाचार्यस्तु दमगुणैः साकं त्यागस्य षड्विपर्ययानपि संयोज्य चतुर्विंशति दोषान् ब्रूते । तदेवोचितमाभाति अतः 'एते' पदेन दमदोषत्यागविपर्ययोरुभयोः ग्रहणं भवति न तु दमदोषस्यैव ।

अनु०-मद के अठारह दोष हैं । त्याग छह प्रकार का होता है । इनके विपरीत श्रद्धा आदि दम के अठारह गुण तथा त्याग के छह विपर्यय कुल चौबीस मद के दोष ( विनाशक ) हैं ।

षट् प्रकारक त्यागमाह-

मू०-श्रेयांस्तु षड्विधस्त्यागः तृतीयो दुष्करो भवेत् ।
तेन दुःखं तरन्त्येव भिन्नं तस्मिन् जितं कृते ॥२७॥

मर्मभेदिनी-षड्विधः = षट्प्रकारकस्त्यागः, श्रेयान् = प्रशस्ततरः, तेषु षट्प्रकारकेषु त्यागेषु तृतीयः कामत्यागः, दुष्करो भवेत्, भवतीत्यर्थः । तस्मिन् = कामत्यागे कृते सति भिन्नम् = भेदबुद्धिरिति यावत् । अत्र भावेनिष्ठया जितम् सिद्धम्भवति । तेन = भेदबुद्धेस्त्यागेन मुमुक्षवः दुःखं = सप्तविधदुःखसंभिन्नं जगत् तरन्ति । अगासीदपि भगवान् भेदबुद्धिरहितस्य प्राशस्त्यम् + 'वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ।' सर्वत्र परमात्मकत्वदर्शनमेव अभेदबुद्धेर्जनकम् । श्रुतिरप्याह-यत्रान्यत्पश्यत्यन्यच्छृणोति तदेवाल्पम् । यदल्पं तद्-दुःखम् ।' किञ्च-'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते । इति । अतः कामत्यागात्-भेदबुद्धेस्त्यागो भवति तेन च भवति संसारजयः ।

अनु०-छह प्रकार का त्याग प्रशंसनीय है। इनमें तीसरा काम त्याग दुष्कर है । काम त्याग के द्वारा भेद बुद्धि का त्याग होता है तथा उसके द्वारा मुमुक्षु संसार को पार कर जाता है ।

त्यागस्य षट् प्रकारानाह-

मू०—श्रेयांस्तु षड्विधस्त्यागः श्रियं प्राप्य न हृष्यति ।
इष्टापूर्ते द्वितीयं स्यान्नित्यवैराग्ययोगतः ॥२८॥
कामत्यागश्च राजेन्द्र स तृतीय इति स्मृतः ॥
अप्यवाच्यं वदन्त्येतं स तृतीयो गुणः स्मृतः ॥२९॥
त्यक्तै द्रव्यैर्यद्भवति नोपयुक्तैश्च कामतः ॥
न च द्रव्यैस्तद्भवति नोपयुक्तैश्च कामतः ॥३०॥
न च कर्मस्वसिद्धेषु दुःखं तेन च नग्लपेत् ।
सर्वैरेव गुणैर्युक्तो द्रव्यवानपि यो भवेत् ॥३१॥
अप्रिये च समुत्पन्ने व्यथां जातु न गच्छति ।
इष्टान् पुत्रांश्च दारांश्च न याचेत कदाचन ॥३२॥
अर्हते याचमानाय प्रदेयं तच्छुभं भवेत् ।
अप्रमादी भवत्येतैः स चाप्यष्टगुणो भवेत् ॥३३॥

मर्मभेदिनी—षट् प्रकारक एव त्यागः श्रेयान् = कल्याणकरः । तत्र, श्रियं लक्ष्मीं विद्यां वा प्राप्य = लब्ध्वा न हृष्यति = न दृप्तो भवति पुरुषः इति तु प्रथमस्त्यागः । नित्यस्य = शाश्वतिकस्य स्वाभाविकस्येतियावत् । ऐहिकामुष्मिकफलभोगविरागरूपस्य वैराग्यस्य योगतः = संबन्धात्—इष्टम् = यज्ञादिकम्, आपूर्तम् = वापीकूपखननादिकम् इति द्वितीयो त्यागः ॥२८॥ राजेन्द्र = धृतराष्ट्र सः प्रसिद्धः कामत्यागः = काम्यानां वस्तूनां लिप्सायास्त्यागः तृतीयस्त्यागः स्मृतः । कामत्यागस्य पराकाष्ठामाह—अपीत्यादिना—एतं कामत्यागमेव तत्त्वज्ञाः निवृत्तिकरत्वात् अवाच्यं वदन्ति । स एव तृतीयो गुणः । उत्तमांप—यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदिस्थिताः ॥ इत्यादिभिः

स्य फ़ैरेव द्रव्यैर्यन्निष्कामत्वं भवति तत् कामपूर्वकमुपभुक्तैर्नभवति। अगासीदपि भगवान् 'न जातु कामः कामानामुपभोगेन शाम्यति।' इति। बहुभिर्लब्धैरपिधनैः निष्कामत्वं नहि भवति। न वा कामतः कामेनद्वारा उपयुक्तैः = 'व्ययीकृतैरपि निष्कामत्वं भवति ॥ ३० ॥ सर्वैरेव कीर्त्यादिभिर्गुणैर्युक्तो यो भवति। द्रव्यवान् = काम्यवस्तुभिः सम्पन्नः स पुरुषः क्रतेषु कर्मसु फलेग्रहि अभूतेषु सत्सु न तु दुख कुर्यात् न वा तेन दुःखेन ग्लपेत् = ग्लानि प्राप्नुयात् ॥३१॥ एवंविधः पुरुषः कीर्तिविनादीनां नाशस्य कारणेषु समुत्पन्नेषु अपि जातु = कदाचिदपि व्यथां न गच्छति = कष्ट नह्यनुभवति। इति वर्णितः चतुर्थस्त्यागः। अथ पञ्चममयाच्आ रूपं त्याग ब्रूते इष्टान्नित्यादिना—कदाचन = कदाचिदपि, इष्टान् = अनुकूलान्, पुत्रान् = आत्मजान् दारांश्च = पत्न्यादिकान् न याचेत् = नहि = प्रार्थयेत् ॥ ३२ ॥ अर्हते. इत्यादिना षष्ठमाह—अर्हते = याग्याय, याचमानाय = याचनां कुर्वते याचकाय यत् प्रदेयम् भवति तन्महते-कल्याणाय कल्पते त्यागिनः पुरुषस्य। एतैः षड्विधैः त्यागैः सः मुमुक्षुः अप्रमादी = भवति प्रमादरहितस्य तस्य पुरुषस्य अप्रमादश्चाष्टविधंगुणैरुपेतो भवतीति यावत् ॥३३ केचन मूलग्रन्थ प्रमोषका व्याख्याकाराः आचार्यं नीलकण्ठम् अनादृत्य अक्षिणी निमील्य त्रीनेव त्यागान् द्वेधा विभज्य तानेव षट् त्यागानाहुः। तत्त्वसमीक्षियकृतम्

अनु०—छह प्रकार का त्याग कल्याणकारी है। उनमें पहला त्याग लक्ष्मी अथवा विद्या को प्राप्त कर तृप्त न होना है। स्वाभाविक वैराग्य से सम्पन्न होकर लोककल्याणार्थ इष्ट एवं आपूर्त कर्मों को करना दूसरा त्याग है। धृतराष्ट्र! कामका त्याग तीसरा त्याग है। तत्त्वज्ञों ने इसे ही अवाच्य ( अवर्णनीय ) तथा तृतीय गुण भी कहा है। काम्यवस्तु के उपभोग, अथवा धन व्यय

करके इच्छाओं की पूर्ति द्वारा जिसको नहीं प्राप्त किया जा सकता है वह निष्कामत्व चौथा त्याग हैं सभी साधनों से सपन्न होकर भी निष्काम पुरुप कर्मों के विफल हो जाने पर दुखी नहीं होता। त्यागी पुरुप अपनी स्त्री तथा पुत्रों से भी कोई याचना नहीं करता। यह उसका पांचवां त्याग है। योग्य याचक से वह सभी वस्तुओं को दान देकर कल्याण प्राप्त करता है। यह त्यागी का छठा त्याग है। इन छह प्रकार के त्यागों द्वारा वह प्रमाद रहित हो जाता हैं तथा उसका अप्रमाद आठ गुणों से सम्पन्न हो जाता है ॥३३॥

अप्रमादस्याष्टौ गुणानाह-

सू०-सत्यं ध्यान समाधानं चोद्यं वैराग्यमेव च ।
अस्तेयं ब्रह्मचर्यं च तथाऽसंग्रहमेवच ॥३४॥

मर्मभेदिनी-सत्यम्-अमृषाभाषणम्, ध्यानम् = तैलधारावदविच्छिन्नस्मृतिसंतानेन परमात्मनश्चिन्तनम्। समाधानम् = समाधिः येन मुमुक्षुः विशदविशदतरविशदतमतयाऽन्ततोयथावदपरोक्षयति स्वपरयोरस्वरूपम्। चोद्यम् = तर्कः। येन अनन्ताक्षय्यफलवत्यां ब्रह्मविविदिषायां प्रवर्तते मुमुक्षुः। वैराग्यम् = ऐहिकामुष्मिक फलभोगवितृष्णत्वरूपम्। अस्तेयम् = परस्वापहरणाभावः। ब्रह्मचर्यम् = अष्टाङ्गमैथुनत्यागः

उक्तञ्च-"स्मरणं कीर्तनं केलिर्वीक्षणं गुह्यभाषणम्।
संकल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ॥"

असंग्रहः- अपरिग्रहः पुत्रदारक्षेत्रादीनाम्।

अनु०-सत्य, ध्यान, समाधि, तर्क, वैराग्य, अस्तेय, ब्रह्मचर्य

तथा अपरिग्रह इन आठ गुणों का पालन, मुमुक्षु को करना चाहिये।

दोषाणां त्याज्यत्वमाह—

मू०—एवं दोषा दमस्योक्तास्तान् दोषान् परिवर्जयेत् ।
दोषत्यागेऽप्रमादः स्यात् स चाप्यष्टगुणो मतः ॥३५॥

मर्मभेदिनी—उपरि दमस्य अष्टादशदोषाः प्रोक्ताः । तान् दोषान् परित्यजेत् । अनेन दोषपरित्यागेनऽप्रमादो जायते । स चाप्यप्रमादः सत्यध्यानादिभिरष्टभिर्गुणैरुपेतो भवति ।

अनु०—इस तरह दम के जो अठारह दोष बतलाये गये हैं, उन दोषों को त्याग दे । दोषों के त्याग से आठगुणों से युक्त अप्रमाद होता है ।

प्रमादजन्यानष्टौ दोषानभिधत्ते—

मू०—अष्टौ दोषाः प्रमादस्य तान् दोषान् परिवर्जयेत् ।
इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत ।
अतीतानागतेभ्यश्च मुक्त्युपेतः सुखी भवेत् ॥३६॥

मर्मभेदिनी—प्रमादस्य अष्टौ दोषाः भवन्ति । तेच—चक्षुजिह्वाघ्राणश्रोत्रत्वगिन्द्रियाणां रूपरसगन्धस्पर्शशब्दानां विषये रागद्वेषरूपाः पञ्चदोषाः सन्ति । मनसश्चाभ्यन्तरेन्द्रियस्य रागद्वेषरूपः संकल्पविकल्प जन्यः षष्ठो दोषः । अतीते नष्टपुत्रादिविषये शोकरूपः सप्तमो दोषः अप्राप्तानां पुत्रादीनामभावे मनसस्संतापरूपोऽष्टमो दोषः । एतेभ्यः अष्टप्रकारकेभ्यः प्रमाददोषेभ्यो मुक्तः पुरुषः सुखी भवतीत्यर्थः ।

अनु०—दम के आठ दोष बतलाये गये हैं । उन दोषों का परित्याग करना चाहिये । चक्षु, जिह्वा, घ्राण, त्वक्, एवं श्रोत्र तथा

मन इन छह इन्द्रियों के छह प्रकार के दोष हैं । अतीत एवं अना-

गत वस्तु के विषय में होने वाले शोक रूपी क्रमशः सातवें और आठवें दोष हैं। इन आठ दोषों से मुक्त साधक सुखी होता है।

दमत्यागाप्रमादानुक्त्वा तेषां सत्यमुखत्वं प्रागुक्तं विवृणोति—

मू०-सत्यात्मा भव राजेन्द्र सत्ये लोकाः प्रतिष्ठिताः

तांस्तुसत्यमुखानाहुः सत्ये ह्यमृतमाहितम् ॥३७॥

मर्मभेदिनी-राजेन्द्र = धृतराष्ट्र सत्यात्मा = सत्ये आत्मा = चित्तं यस्याऽसौ तथा भव, सत्ये = सत्याधारे एव लोकाः प्रतिष्ठिताः = संस्थिता इति। विचक्षणाः तान् = दमत्यागाप्रमादान् सत्यमुखान् = सत्यप्रधानान् आहुः। हि = यत = सत्ये एव अमृतम् = मोक्षः, आहितम्। सत्येनैव मोक्षो लभ्यत इत्यर्थः

अनु०-धृतराष्ट्र आप सत्य का पालन करें, सत्य पर ही संसार टिका है। दम, त्याग और अप्रमाद सत्य प्रधान हैं। सत्य से ही मोक्ष की प्राप्ति होती है।

दोषनिवृत्त्यैव तपः सिद्धिर्धात्रा कृतेत्याह—

मू०-निवृत्तेनैव दोषेण तपोव्रतमिहाचरेत्।

एतद्धात्रा कृतं वृत्तम् सत्यमेव सतां व्रतम् ॥३८॥

मर्मभेदिनी—आत्मकल्याणकामिना पुरुषेण इहलोके दोषनिवृत्तिपूर्वकमेव व्रतानां तपसां चानुष्ठानं कर्तव्यम्। ब्रह्मा दोषनिवृत्तिपूर्वकमेव तपांसि तप्त्वा सिद्धिमगात्। सतां सज्जनानाम्। व्रतं यथार्थभाषणरूपं सत्यस्य पालनमेवास्ते।

अनु०—आत्मकल्याण कामियों को दोष त्याग पूर्वक ही व्रत तथा तप करना चाहिये। ब्रह्मा ने दोषों का परित्याग करके ही सिद्धि प्राप्त की। सज्जनों का एकमात्र व्रत सत्य का पालन ही है।

इदानीं प्रश्न व्याख्यानमुपसंहरति—

दोषैरेतैर्विमुक्तं तु गुणैरेतैस्समन्वितम् ।
एतत् समृद्धमत्यर्थं तपो भवति केवलम् ॥३९॥

मर्मभेदिनी-एतैः क्रोधादिभिः दोषैरहितम् धर्मादिभिश्चगुणैस्समन्वितम् तपः अत्यन्तम् समृद्धं भवति । इत्येव तपः केवलमित्यभिधीयते

अनु०-इन क्रोध आदि दोषों से रहित तथा धर्म आदि गुणों से युक्त ही तप समृद्ध होता है । इसे ही केवल तप कहते हैं ।

किं बहुना—

यन्मां पृच्छसि राजेन्द्र संक्षेपात् तद् ब्रवीमि ते ।
एतत् पापहरं शुद्धं जन्ममृत्युजरापहम् ॥

मर्मभेदिनी-हे राजेन्द्र ! यत् माम् पृच्छसि तदहम् तुभ्यमखिलं संक्षेपाद् ब्रवीमि एतत् मया प्रोक्तम् तपो व्रतादिकम् पापहरम्=सर्वेषाम् पापानां विनाशकम् शुद्धम्=पावनम् जन्ममृत्युजरादिकानाम् दोषाणाम् विनाशकमास्ते ।

अनु०-धृतराष्ट्र तुम जो कुछ भी पूछते हो, उसे मैं संक्षेप में तुम्हें बतलाता हूँ । यह पापों को नष्ट करने वाला, शुद्ध तथा जन्म, मृत्य एवं जरा आदि दोषों से युक्त संसार-चक्र को नष्ट करने वालाहै ।

एवं विद्यासाधनान्यधिगम्य पुनः पृच्छति—

मू०—धृतराष्ट्र उवाच—धृतराष्ट्रने कहा-

मू०—आख्यानपञ्चमैर्वेदैर्भूयिष्ठं कथ्यते जनः ।
तथा चान्ये चतुर्वेदास्त्रिवेदाश्च तथा परे ॥४१॥



द्विवेदास्चैकवेदाश्चाप्यनृचश्च तथा परे ।

तेषां स तु कतरः स स्याद् यमहं वेद वै द्विजम् ॥

मर्मभेदिनी–आख्यानं पुराणम् पञ्चमं येषां वेदानां तैः वेदैः, चतुर्णां वेदानां पुराणानाञ्च ज्ञाता जनः वेदज्ञः=पुरुषः' भूयिष्ठम् =अत्यर्थम्, कथ्यते=श्लाघ्यते एतेषु वेदज्ञेषु एके=चतुर्वेदाः; चत्वारो वेदयन्ति ये ते सन्ति, अन्ये, त्रिवेदाः=ऋग्यजुस्साम्नाम् ज्ञातारः सन्ति, अन्ये द्विवेदाः=द्वयोरेव वेदयोर्ज्ञातारः, अपरे–एकस्यैव स्वशाखामात्रस्य वेदस्य ज्ञातारः सन्ति। एतेभ्योऽन्ये अनृचः=परित्यक्तवेदास्सन्ति। एतेषां षट्प्रकारकाणां मध्ये कतरो ब्राह्मणः अस्ति यमहं श्रेष्ठं द्विजम् विद्याम्।

अनु०–चारो वेदों तथा पुराणों का ज्ञाता पुरुष श्रेष्ठ कहा जाता है। वैदिकों में कुछ चारो वेदों के ज्ञाता, कुछ तीन, कुछ दो तथा कुछ एकवेद के ज्ञाता एवं कुछ वेदों का परित्याग करने वाले हैं। इन सबों में किसे मैं श्रेष्ठ द्विज जानुँ

अत्र समाधत्ते–

मू०—सनत्सुजात उवाच–सनत्सुजात ने कहा-

मू०–एकस्य वेदस्याज्ञानाद् वेदास्ते बहवः कृताः।
सत्यस्यैकस्य राजेन्द्र सत्ये कश्चिदवस्थितः ॥४३॥

मर्मभेदिनी–राजेन्द्र धृतराष्ट्र, पूर्वमेक एव वेदः असीत् परञ्च तस्य महदाकारस्य समग्रस्य वेदस्य धारणे असमर्था जना अभूवन्। तदा समग्रस्य वेदस्य परम्परासंरक्षणाय भगवान् वेदव्यासः एकमेव वेदं चतुर्धा व्यभजत्। वस्तुतस्तु सत्यस्वरूपस्य एकस्य परस्य ब्रह्मणः विभूत्यैश्वर्यादीनां समुपस्थापकः वेद एक एव। इमे चत्वारोऽपि वेदास्तस्यैव परब्रह्मणः ऐश्वर्यादिकं प्रतिपादयन्ति। तस्मिन् वेदवेद्ये परस्मिन् ब्रह्मणि कश्चिदेव पुरुषः अवस्थितो भवति,

नतुसर्वे ।

अनु०—सत्यस्वरूप एक परब्रह्म का प्रतिपादक वेद पहले एक ही था। उस सम्पूर्ण वेद को न जान सकने के कारण एक ही वेद को महर्षि व्यास ने चार भागों में विभक्त कर दिया। उस सत्यस्वरूप ब्रह्म में विरले पुरुष ही निष्ठा करते हैं।

सत्यस्वरूपमेकं वेदवेद्य ब्रह्माविज्ञाय ऐहिकामुष्मिकफलप्रदेषु वेदप्रोक्तेषु पुरुषः सुखाप्रभागेच्छया प्रवर्तते काम्यकर्मस्वित्याह—

सू०—एवं वेदमविज्ञाय प्राज्ञोऽहमिति मन्यते ।
दानमध्ययनं यज्ञो लोभादेव प्रवर्तते ॥४४॥

मर्मभेदिनी—एवम् = 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिषु श्रुतिषु प्रोक्तम् अशेषचिदचिच्छेषिणं उभयविभूतिनायकम्, अखिलहेयप्रत्यनीकम्, निखिलकल्याणगुणसागरं वेद = वेदवेद्यम् परंब्रह्म अविज्ञाय = अज्ञात्वा, केवलं वेदाभ्यासपरायणः सकामानि कर्माण्यनुतिष्ठन् आत्मानं प्राज्ञम् मनुते। दानम् 'स्वाध्यायान्मा प्रमदः, इत्यादिषु प्रोक्तमध्ययनम् यज्ञः—अश्वमेधादिकम् एतत् सर्वम् ऐहिकामुष्मिकसुखानां लोभादेव प्रवर्तते।

अनु०—इस तरह सम्पूर्ण जगत् के नियामक वेदवेद्य परंब्रह्म को जाने विना वेदाभ्यासपरायण पुरुष अपने को प्राज्ञ मानते हुए लौकिक एवं पारलौकिक सुखों का प्राप्ति के लोभ से, दान, अध्ययन, यज्ञ आदि कर्मों में प्रवृत्त होता है।

एकस्यैवयज्ञस्यविविधरूपतां प्राह—

सू०—सत्यात्प्रच्यवमानानां संकल्पश्च तथाभवेत् ।
ततो यज्ञः प्रतायेत सत्यस्यैवावधारणात् ॥४५॥

सत्यम् सत्यादि लक्षणात् परब्रह्मणः प्रच्यवमानानाम् = प्रच्यु-

तानां पुरुषाणां संकल्पः तथा = अल्पक्षय्यलौकिक-पारलौकिकानन्द विषयको भवेत् । ततः = तथाविधेन संकल्पेनैव, कर्म ऐहिकामुष्मिकफलप्रदम्, प्रतायेत = विस्तृत स्यात् । यतः परमानन्दप्राप्तेः प्रच्युतः पुरुषः लौकिकेषु पारलौकिकेष्वेवसुखेषु सत्यबुद्धिं कुरुते । अ०--सत्य स्वरूप परमात्मप्राप्ति से पराङ्मुख पुरुष अल्प एवं क्षय्य लौकिक एवं स्वर्गीय सुखों को ही सत्य मान लेते हैं, अतएव ही उनका संकल्प उन सुखों की प्राप्ति के लिए होता है। तदनन्तर वे काम्य यज्ञों को करते हैं ।

मू०—मनसाऽन्यस्य भवति वाचान्यस्याथ कर्मणा ।
सांकल्पसिद्धः पुरुषः सांकल्पानधितिष्ठति ॥४६॥

मर्मभेदिनो-यज्ञ इत्यनुकृष्यते । अन्यस्य कृते यज्ञः मनसा देवता ध्यानादिरूपो भवति । अपरस्य कृते सएव वाचा = ब्रह्मयज्ञजपादि रूपो भवति । एताभ्यामुभाभ्यां भिन्नस्य कृते कर्मणा अश्वमेधादि रूपः स एव यज्ञो भवति। संकल्पसिद्धः पुरुषः = ब्रह्मवेत्ता संकल्पानाम् = संकल्पलभ्यानाम् ब्रह्मादिलोकानामधिष्ठाता भवति ।

अ०-कोई पुरुष मानसिक (देवताध्यानरूपी) यज्ञ करता है' कोई वाचिक (वेदपाठ आदि) यज्ञकरता है। कुछ लोग अश्वमेधादि कर्मसाध्य यज्ञ करते हैं। संकल्पसिद्ध ब्रह्मवेत्ता पुरुष संकल्प लभ्य ब्रह्मलोक आदि लोकों का अधिष्ठाता होता है ।

आत्मज्ञानात्मज्ञयोः कर्तव्यमाह--

मू०—अनैभृत्येन चैतस्य दीक्षितव्रतमाचरेत् ।
नामैतद्धातुनिर्वृत्तं सत्यमेव सतां परम् ॥

मर्मभेदिनी— एतस्य = संकल्पस्य च अनैभृत्येन = अदार्ढ्येन, आत्मज्ञानाभावाद् वन्ध्यसंकल्पत्वे सतीत्यर्थः । दीक्षितव्रतम् = मूर्द्धीकरण वाग्मनादिकं आचरेत् = कुर्यात् । एतत् = दीक्षितमिति नाम

'दीक्षव्रतादेशे' इति दीक्षधातोः निष्ठाप्रत्यये कृते सति निष्पन्नम् । सतां = सज्जनानाम् तु सत्यमेव = सत्यत्वगुणसम्पन्नम् ब्रह्मैव, परम् = श्रेष्ठम् तत्त्वमिति यावत् ।

अनु०–अनात्मज्ञ पुरुष को चाहिये कि वह संकल्प की अदृढता से मौन आदि नियमों का पालन करे। दीक्ष्धातु का अर्थ व्रत करना है। आत्मज्ञों के लिए तो परंब्रह्म के स्वरूप आदि का चिन्तन ही श्रेयष्कर है।

उपर्युक्तमर्थमेव स्पष्टयते श्लोकद्वयेन–

मू०–ज्ञानं वै नाम प्रत्यक्षम् परोक्षं जायते तपः ।
विद्याद् बहुपठन्तं तु द्विजं वै बहुपाठिनम् ॥४८॥
तस्मात् क्षत्रिय मामंस्था जल्पितेनैव वै द्विजम् ।
य एव सत्यान्नापैति स एव ब्रह्मणस्त्वया ॥४९॥ १९८०

मर्मभेदिनी–तत्त्वहितपुमर्थानां ज्ञानस्य शोकमोहादिकानां निवृत्तिरूपं प्रत्यक्षं फलम् भवति तपसस्तु = पुण्यादृष्टजनकत्वरूपं फलम् परोक्षम् = अप्रत्यक्षम् भवति । बहुपठन्तम् = अर्थावगमतदाचरणादिभ्यः पराङ्मुखम् सततं वेदाभ्यासपरायणम् तु बहुपाठिनम् एव द्विजम् विद्यात् = जानीयात् इत्यर्थः ॥४८॥ तस्मात् वै = निश्चयेन क्षत्रिय = धृतराष्ट्र जल्पितेनैव अत्यधिकाध्ययनेनैव मामंस्थाः = अत्यधिकं मा सम्मानयेः । य एव ब्राह्मणः, सत्यस्वरूपस्य ब्रह्मणः स्वरूपादीनां ध्यानान्नापैति = नहि प्रमादं करोति, स एव त्वया ब्राह्मणः = स्वरूपज्ञो मन्तव्य इति शेषः ।

अनु०–स्वरूपज्ञान का प्रत्यक्ष फल शोक आदि की निवृत्ति तथा तप का पुण्यादृष्टजनकत्वरूप परोक्ष फल होता है। बहुपाठी द्विज को वेदाभ्यासी मानना चाहिये। धृतराष्ट्र ! केवल

अध्यन करने मात्र से किसी का बहुत सम्मान न करो। तुम उसे ही तत्त्वज्ञ समझो जो स्वरूप चिन्तन से पराङ् मुख नहीं होता।

वेदाध्ययनयागादेर्वैयर्थ्यमिष्टमेवेत्याह—

मू०—छन्दांसि नाम क्षत्रिय तान्यथर्वा पुरा जगौ महर्षिसंघ एषः।
छन्दोविदस्ते य उत नाधीतवेदा न वेदवेद्यस्य विदुर्हि तत्त्वम् ॥५०

मर्मभेदिनी—क्षत्रिय = धृतराष्ट्र एषः = उपनिषत्प्रसिद्धः अथर्वानामकोमहर्षिः, महर्षीणां संघः = समुदायः यानि छँदान्सि उपनिषन्नाम्ना प्रसिद्धानि पुरा जगौ तान्येवोपनिषद्रूपाणि छँदान्सि सन्ति। परस्या विद्यायाः प्रतिपादकत्वात् पापाच्छादनं कुर्वन्ति उपनिषदः। अतएव तासां छन्दाँसीत्यन्वर्थसंज्ञा। निर्वक्त्यपि श्रुतिः—छादयन्ति ह वा एनं छन्दांसि पापात् कर्मणः' महर्षि अथर्वा अपि प्राह यज्ञानां पापाद्रक्षितुमसामर्थ्यम्—"प्लवा ह्येते अदृढा यज्ञरूपाः।" इति। अतएव कर्मार्थिनां छन्दसां छन्दस्त्वम् गौणमेव। किञ्च—ये उत =। अपि अधीतवेदा साङ्गवेदाध्यायिनस्ते वेदवेद्यतत्त्वस्याज्ञानात् वस्तुतः छन्दोविदो नहि सन्ति। वेदवेद्यस्य परस्य ब्रह्मणस्स्वरूपादीनां ज्ञातार एव वस्तुतो छन्दोविदस्सन्तीति भावः।

अनु०—उपनिषद् प्रसिद्ध अथर्वा आदि महर्षियों ने जिन उपनिषदों का गान किया वे पापप्रणाशक उपनिषद ही छन्दः शब्द वाच्य हैं। साङ्गवेदाध्यायी भी वेदवेद्य परब्रह्म को जाने बिना वास्तविक वेदज्ञ नहीं हो सकता।

छन्दांसि नाम द्विपदां वरिष्ठ स्वच्छन्दयोगेन भवन्ति तत्र।
छन्दोविदस्तेन च तानधीत्य गता न वेद्यस्य न वेद्यमार्याः ॥५१॥

मर्मभेदिनी—हे द्विपदां वरिष्ठ = धृतराष्ट्र तत्र = ब्रह्मविषये, छन्दांसि = वेदाः स्वातन्त्र्ययोगेन = स्वातन्त्र्येण प्रमाणं भवन्ति।

परमात्मविषये वेदा एव प्रमाणं सन्तीत्याह = 'शास्त्रयोनित्वादिति सूत्रे भगवान् बादरायणः । तेनैव छन्दोविदः = वेदज्ञाः आर्याः तान् वेदान् अधीत्य वेदस्यवेद्यम्–परमात्मानं न गता न = गता एव–परमात्मानमापुरित यावत् ।

अनु०–धृतराष्ट्र ! वेद परमात्मतत्त्व के विषय में स्वतन्त्र प्रमाण हैं । अतएव वेदज्ञ विद्वान् वेदों का अध्ययन करके परमात्मा को प्राप्त कर लेते हैं ।

वेदवेद्यम् तत्त्वम् वेदज्ञेषु कश्चनैवावैति–

न वेदानां वेदिता कश्चिदस्ति कश्चित्त्वेतान् बुध्यते वापि राजन् ।
यो वेद वेदान्न स वेद वेद्यं सत्ये स्थितो यस्तु स वेद वेद्यम् ॥५२॥

मर्मभेदिनी–राजन् = धृतराष्ट्र ! वेदानां रहस्यस्य वेदिता = ज्ञाताकश्चित नास्ति । वेदाध्यायिषु कश्चित एव एतान् = वेदानां सारभूतानामर्थानाम् प्रतिपादकान् शमदमादीन् उपायान् बुध्यते = जानाति । यो: पुरुषः वेदान् = वेदार्थान् वेद सोऽपि वेदवेद्यं तत्त्वं नहि वेद, यो मुमुक्षुः पुरुषः सत्ये = ब्रह्मणि स्थितो भवति स एव वेद वेद्यम् तत्त्वम् ब्रह्म वेद, नेतरः ।

अनु०–कोई वेदों के रहस्यों का ज्ञाता नहीं है, धृतराष्ट्र ! वेदपाठियों में से कोई ही वेद के रहस्यों को जान पाता हैं । वेदों का जानकार वेदप्रतिपादिततत्त्व का ज्ञाता नही होता । ब्रह्मनिष्ठ व्यक्ति ही वेदवेद्य ब्रह्म को जानता है ।

उपर्युक्तमर्थमेव भङ्ग्यन्तरेण उपोद्बलयति–

मू०–न वेदानां वेदिता कश्चिदस्ति वेद्येन वेदं न विदुर्न वेद्यम् ।
यो वेद वेदं स च वेद वेद्यम् यो वेदवेद्यम् न स वेद सत्यम् ॥५३॥



मर्मभेदिनी–वेदानाम् ऋगादिचतुर्णाम् मध्ये, कश्चिदपि वेदः

वेदानां प्रतिपाद्यभूतस्य ब्रह्मणो वेदिता ज्ञाता नास्ति, वेतृत्वस्य चेतनानामसाधारणधर्मत्वात्, वेदानाञ्च जडत्वात् । वेदेन = ज्ञानविषयेण जडेन वेदम् वेदैकवेद्यमात्मानं परमात्मानञ्च न विदुः = नहि जानन्ति । यः पुरुषः वेदम् = वेदवेद्यं सर्वेषामात्मभूतं, जगतोऽभिन्ननिमित्तोपादानञ्च परमात्मानं वेद स एव, 'एकविज्ञानेनसर्वविज्ञाननयेन' वेद्यभूतमखिलं द्रव्यम् तदात्मकमवेति । यः केवलम् ज्ञानविषयभूतान्येव वस्तूनि जानाति सः, स्वेतरसमस्तवस्तु-विलक्षणम् सत्यमात्मानं वेत्तुं नहि प्रभवति ।

अनु०-ऋक् आदि चारों वेदों में से कोई भी वैदिक अर्थों का ज्ञाता नहीं है। क्योंकि वेद जड़ हैं और ज्ञातृत्व चेतन का असाधारण धर्म है । जडविषयों के द्वारा वेदवेद्य आत्मतत्त्व को नहीं जाना जा सकता है । आत्मतत्त्व का ज्ञाता व्यक्ति सभी ज्ञेय वस्तुओं को परमात्मात्मकरूप से जानता है । वेद्य वस्तुओं का ज्ञाता परमात्मतत्त्व का ज्ञाता नहीं होता।

यो वेद वेदान् स च वेद वेद्यं, न तं विदुर्वेदविदो न वेदाः ॥
तथापि वेदेन विदन्ति वेदं, ये ब्राह्मणा वेदविदो भवन्ति ॥५८॥

मर्मभेदिनी-यः कश्चिद् वेदाध्यायी पुरुषः वेदान् ऋग्यजुस्सामानि अर्थावगमपुरस्सरम् वेद = जानाति स एव सर्वं वेद्यजातं वेद वेदानामेव सर्वेषु ज्ञेयेषु परप्रामाण्यात् । किन्तु उपनिषत्प्रतिपाद्यम् परं पुरुषं तु न वा वेदवेत्तारो न वा स्वयं वेदाः कृत्स्नतो जानन्ति । कार्त्स्न्येनैव अविषयत्वं वैदिकलौकिकवचसां प्रतिपादयन्ति 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।' इत्यादिकाः श्रुतयः । यद्यपि कृत्स्नतः वैदिकवचसामविषयभूतं ब्रह्म तथापि, वेदानाम् अभ्यासेन अर्थावगमेन अनुष्ठानेन वेदोक्तविधिना परमात्मोपासनेन च ये तत्त्वज्ञतां गताः ते वेदेन-'सत्यंज्ञानमनन्तं ब्रह्म' 'सदेव सोम्येदमग्र

असीत् 'यः सर्वज्ञः सर्ववित्' 'सन्मूलास्सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः। 'इत्यादिना वेदम्-अशेषचिदचिच्छेषिणम्, अखिवलकल्याणगुणसागरमखिलहेयप्रत्यनीकमुभयविभूतिनायकम् श्रियः पतिम् विदन्ति जानन्ति ।

अनु०-वेदाध्ययन करने वाला पुरुष सभी वेद्य अर्थों को जानता है । किन्तु परमात्म तत्त्व को न तो वैदिक ज्ञान पाते हैं और न वेद ही ) किन्तु जो वेदज्ञ ब्रह्मण वेद के अर्थों को ज्ञानकर उनका अनुष्ठान तथा वेदोक्त विधि से परमात्मा का ध्यान करते हैं वे)वेद के माध्यम से परमात्मा के स्वरूप को जानते हैं ।

उपर्युक्तमेवार्थम् निदर्शनमुखेन द्रढयति —

मू०---धामांशभागस्य तथाहि वेदा यथा च शाखा हि महीरुहस्य ।
संवेदने चैव तथामनन्ति तस्मिन् हि सत्ये परमात्मनोऽर्थे॥ ५५॥

मर्मभेदिनी–यथा = येन प्रकारेण धामांशभागस्य = धाम तेजः, तन्मया अंशा यस्य असौ चन्द्रः तस्य भागस्य प्रतिपद्गतायाः कलायाः संवेदने = ज्ञापने यथा = येन प्रकारेण महीरुहस्य = वृक्षस्य शाखाः कारणतां यान्ति। प्रतिपच्चन्द्रकलायाः अत्यन्तक्षीणत्वात् ताम् बोधयितुम् वृक्षशाखाया उपरि चन्द्रो वर्तते इति कथ्यते, तथैव वेदाः अपि त्रिविधपरिच्छेदरहितस्यापि परस्य पुरुषस्य संवेदने 'त त्वौपनिषदं पुरुषम् पृच्छामि' सत्यं ज्ञानमनन्तं ब्रह्म' 'तस्य यथा कप्यासमेवमेवाक्षिणी तस्योदितिनाम 'यथेन्द्रगोपः' 'महारजनंवासः' 'हिरण्यश्मश्रुः । हिरण्यकेशः आपणखात् सर्व एव सुवर्णः' इत्यादिभिर्वाक्यैः कारणतां यान्ति ।

अनु०-जिस तरह वृक्षशाखोपलक्षित चन्द्रमा की प्रतिपद् कला का ज्ञान होता है, उसी तरह अनन्त पर ब्रह्म का ज्ञान वेद वाक्यों द्वारा होता है ।

श्रोत्रियो ब्रह्मनिष्ठो वेदविदेवाचार्यो भवितुमर्हति—

मू०—अभिजानामि ब्राह्मणं व्याख्यातारं विचक्षणम्।
यश्छिन्नविचिकित्सः स व्याचष्टे सर्वसंशयान् ॥५६॥

मर्मभेदिनी—आचार्यलक्षणं ब्रूते—व्याख्यातारम् = षड्विधतात्पर्यलिङ्गैः शास्त्रवाक्यानां तात्पर्यार्थवर्णनकुशलम्, विचक्षणम् = श्रुतस्यार्थस्य युक्त्यानुचिन्तने समर्थम् एव आचार्यमर्हम् ब्राह्मणम् = ब्रह्मतत्त्वज्ञं अभिजानामि । यतः यो हि छिन्नविचिकित्सः = शास्त्रीयवाक्यानां परमार्थपर्यालोचने समर्थत्वात् सर्वसंशयविरहितो भवति स एव सर्वेषां परेषां संशयानाम् व्याख्याने प्रभवति ॥

अनु०—षड्विधतात्पर्यलिङ्ग के द्वारा वेद वाक्यों के व्याख्याता, शास्त्र कुशल ब्राह्मण को मैं ब्रह्मवेत्ता मानता हूँ। स्वयं सभी संशयों से रहित आचार्य दूसरों के संशयों को दूर कर सकता है।

दिक्ष्वन्विष्य परमात्मनः प्राप्तिं कर्तुं न शक्यते—

मू०—नास्य पर्येषणं गच्छेत् प्राचीनं नोत दक्षिणम्;
नार्वाचीनं कुतस्तिर्यङ् नादिशं तु कथञ्चन ॥

मर्मभेदिनी—अस्य = परमात्मनः पर्येषणम्—अन्वेषणस्थानम् न तु प्राचीनम् = प्रचीदिग् नवा उत्तरदिशा नवा पश्चिमादिदिशा नवा तिर्यक् न च कथञ्चन केनापि प्रकारेण अदिशं = दिग्विहीनं हृदयं वा भवितुमर्हति ।

अनु०—परमात्मा के अन्वेषण स्थान, पूर्व, पश्चिम, उत्तर, दक्षिण आदि दिशाएँ अथवा हृदय नहीं हैं।

तपस्वी ध्यानयोगेन परमात्मसाक्षात्कारं कुरुते इत्याह—

मू०—तस्य पर्येषणं गच्छेत् प्रत्यर्थिषु कथञ्चन ।
अविचिन्वन्निमं वेदे तपः पश्यति तं प्रभुम् ॥

मर्मभेदिनी--तस्य = परमात्मनः, प्रत्यर्थिषु = आत्मत्वेन प्रतीयमानेषु पञ्चकोशेषु पर्येषणं गच्छेत् = अन्वेषणं कुर्यात् । परञ्च पञ्चकोशेषु परमात्मनः पर्येषणं दुःखसाध्यमेव । इमम् = परमात्मानम् वेदे अविचिन्वन्–वेदान्तन्यायानप्यचिन्तयन् तपः = तपस्वी पश्यति "निष्कलं ध्यायमानः इति न्यायेन तम् सर्वेषुशास्त्रेषु प्रसिद्धम् अखिलजगन्नियन्तारम् प्रभुम् तैलधारावदविच्छिन्नस्मृति सन्तानरूपेण ध्यानयोगेन पश्यति ।

अनु०–परमात्मा का आत्मा रूप से प्रतीत होने वाले पञ्चकोशों में अन्वेषण कष्टसाध्य है । वेदान्तन्यायों का चिन्तन किये बिना भी शास्त्रों का पर्यालोचन करने वाला तपस्वी ध्यानयोग के द्वारा परमात्मा का साक्षात्कार कर लेता है ।

बाह्याभ्यन्तरचेष्टारहितो योगी आत्मनि परमात्मनो ध्यानं कुर्यात्--

मू०–तुष्णीं भूत उपासीत न चेष्टेन्मनसाऽपि च ।
उपावर्तस्व तद्ब्रह्म अन्तरात्मनि विश्रुतम् ॥५६॥

मर्मभेदिनी--वागाद्युपरमलक्षणो मौनमाकलय्य उपासीत् = परमात्मन उपासनां कुर्वीत परमात्मध्यानकाले, पुरुषः मनसाऽपि न-चेष्टेत = मानसिकीमपि चेष्टां त्यजेत् । विश्रुतम् = वेदेषु प्रसिद्धम् तद्ब्रह्म , अन्तरात्मनि = हार्दाकाशे, उपावर्तस्व = उपास्व ।

अनु०–योगी बाह्य एवं आभ्यन्तर इन्द्रियों को संयमित करके शास्त्र प्रसिद्ध परमात्मा का ध्यान करे, और तुम भी उसका हृदय में ध्यान करो ।

स्वस्वरूपज्ञानमेव मुनित्वस्य प्रयोजकमित्याह--

मू०–मौनान्न स मुनिर्भवति नारण्यवसनान्मुनिः ।
स्वलक्षणं तु यो वेद स मुनिः श्रेष्ठ उच्यते ॥

मर्मभेदिनी—यः = उपासक; मौनात् = सर्वेषामिन्द्रियाणां संयमन रूपेण मौनेन मुनिः = प्राप्य-प्रापक-उपायबाधक-फलानां-स्वरूपाणाम् मननशीलः, न भवति, नवा ग्रामाणां स्वजनानां च संगं विहाय अरण्येषु निवासेन स मुनिर्भवति। यः = विवेकविमोकाभ्यासक्रियाकल्याणानवासादानुद्धर्षाणामनुष्ठानपूर्वकं स्वस्य = जीवस्य परमात्मैकशेषत्वरूपम् परमात्मैकनियाम्यत्वरूपम् परमात्मैकधार्यत्वरूपञ्च स्वरूपं वेद स एव श्रेष्ठः मुनिः उच्यते।

अनु०—मौनधारण अथवा अरण्यवास के द्वारा कोई मुनि नहीं होता स्व स्वरूप का ज्ञाता ही श्रेष्ठ मुनि है।

मू०—सर्वार्थानां व्याकरणाद् वैयाकरण उच्यते।
तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा ॥६१॥

मर्मभेदिनी—सृष्टेरादौ जगताऽभिन्ननिमित्तोपादानकारणभूतं ब्रह्म 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इति श्रुत्यनुसारेण सर्वाणि वस्तूनि प्रकटयामास, अतएव सः सर्वेषामर्थानां व्याकरण कर्ता वर्तते। एतस्मादेव कारणात् सः वैयाकरण इति नाम्नाप्यभिधीयते। यस्मात् कारणात् सः परमात्मा पूर्वं पूर्वं कल्पानुसारमेव उत्तरोत्तरकल्पेषु जगद् व्याकरोति; तस्मादेव कारणात् जगतो व्याकरणंब्रह्ममूलमेव। तथा चाधीयन्ते छन्दोगाः—'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः।' इत्यादिकम्। ब्रह्ममूलत्वादेव जगतः 'एकविज्ञानेन सर्वं विज्ञानमुपादिक्षत्' श्वेतकेतवे पितोद्दालकः।

अनु०—सृष्टि के आदि में सभी वस्तुओं के नाम और रूप का आविष्कार (व्याकृति करने के कारण परमात्मा वैयाकरण कहलाता है। परमात्मा ही जगत् को प्रकट करता है। अत एव जगत् परमात्ममूलक है।

मू२—प्रत्यक्षदर्शी लोकनां सर्वदर्शी भवेन्नरः।
सत्ये वै ब्राह्मणस्तिष्ठंस्तद्विद्वान् सर्वविद्भवेत् ॥६२॥

मर्मभेदिनी—'लोकस्तु भुवने जने'(इत्यमरः)लोकानां सर्वेषां भूरादीनां तदन्तर्गतानां जीवानाञ्च परमात्मात्मकत्वेन प्रत्यक्षदर्शी साक्षाद्द्रष्टा नरः पूरुषः सर्वदर्शी = परमात्मनः कार्यभूतस्य सकलस्य 'कारणविज्ञानेनकार्यं विज्ञाननयेन' द्रष्टा भवेत्। ब्राह्मणः = ब्रह्मवेत्ता सत्ये = सत्यादिलक्षणे ब्रह्मणि तिष्ठन् ब्रह्मवेत्तृत्वात् सर्ववेत्ता भवेदित्यर्थः।

अनु०—सम्पूर्ण जगत् को परमात्मात्मकरूप से देखने वाला पुरुष सर्वद्रष्टा हो जाता है। ब्रह्मनिष्ठ ब्रह्मवेत्ता होने के कारण सर्वज्ञ हो जाता है।

इदानीमुपसंहरत्यध्यायमिमम्—

मू०—धर्मादिषु स्थितोऽप्येवं क्षत्रिय ब्रह्म पश्यति।
वेदानां चानुपूर्व्येण एतद् बुद्ध्या ब्रवीमि ते ॥६३॥

मर्मभेदिनी—धर्मश्च सत्यञ्च दमस्तपश्चेत्यादिषु द्वादशश्लोकेषु प्रोक्तेषु स्थितः। एषु श्लोकेषु प्रोक्तानां अष्टविधेनामप्रमादानाम् पालनेन वेदानाम् = ऋग्यजुस्साम्नाम् आनुपूर्व्येण सोपानक्रमेण च विद्वान् ब्रह्म पश्यतीत्यहम् तुभ्यम् एतत् स्वाभाविकस्नेहवत्या बुद्धया ब्रवीमि।

अनु०—धृतराष्ट्र 'धर्मश्च सत्यञ्च' इत्यादि बारह श्लोकों में प्रोक्त आठ प्रकार के अप्रमादों का पालन तथा वेदों का क्रम से अध्ययन करके तत्त्वज्ञाता ब्रह्म का साक्षात्कार कर लेता है।

इति श्रीमहाभारते उद्योगपर्वणि सनत्सुजातपर्वणि त्रिचत्वारिंशोऽध्यायः।



( द्वितीयोऽध्यायस्समाप्तः )

# अथ-चतुश्चत्वारिंशोऽध्यायः
## ( अथ तृतीयोऽध्यायः )

स्वपरयोस्स्वरूपयाथ्यात्म्यं श्रुत्वेदानीं तदन्तरङ्गसाधनं योग-मार्गं पृच्छति—

धृतराष्ट्र उवाच— धृतराष्ट्र ने पूछा—

सनत्सुजात यामिमां परां त्वं ब्राह्मीं वाचं वदसे विश्वरूपाम् ।
परां हि कामेन सुदुर्लभां कथां प्रब्रूहि मे वाक्यमिदं कुमार । १॥

मर्मभेदिनी-हे सनत्सुजात, याम् ब्रह्मवेत्तॄणां शुकसनकादि-वामदेवादीनां निकाये प्रसिद्धाम्, इमाम् = पूर्वयोरध्याययोरुक्ताम्, पराम् = अत्युत्कृष्टाम् ब्राह्मीं = ब्रह्मसंबन्धिनीं, वाचम् = उपनिषद वाचम्, विश्वरूपाम् = विश्वम् रूप्यते प्रकाश्यते यस्याम् ताम्, किञ्च कामेन = काम्यन्ते इतिकामा तेनः पराम् उत्कृष्टाम्, सुदुर्लभाम् पराविद्यायाः सुदुर्लभत्वात्, कथाम् = कथारूपाम्, वदसे = वक्षि कुमार = हे सनत्सुजात मे = मह्यम्, इदम् वाक्यम् प्रब्रूहि= प्रकर्षेण ब्रूहीत्यर्थः ।

अनु०—सनत्सुजात आप जो इस जगत् प्रकाशिका, उपनिषद् स्वरूप, काम्यवस्तुओं से परे, अत्यन्त दुर्लभ, जिस ब्रह्म विद्या को कह रहे हैं, उसे अवश्य सुनाएँ ।

इदानीमुदतरति ब्रह्मविद्यायाः सुदुर्लभत्वप्रदर्शनमुखेन

सनत्सुजात उवाच— सनत्सुजात ने कहा—

नैतद्ब्रह्म त्वरमाणेन लभ्यं यन्मां पृच्छन्नपि हृष्यस्यतीव ।
बुद्धौ विलीने मनसि प्रचिन्त्या विद्या हि सा ब्रह्मचर्येण लभ्या ॥२



मर्मभेदिनी—मयोपदिश्यमान ब्रह्म, अल्पेनैव शमदमादिसाधनेन

द्वारा कामप्रधानेन पुरुषेण न लभ्यम = प्राप्यम् । ब्रह्मविद्यायाः 'आवृत्तिरसकृदुपदेशादिति फलाध्यायोक्तन्यायेन आविद्याप्राप्तिं परमभक्तिरूपेण परमज्ञानेन लभ्यत्वात । आह चश्रुतिः—'नायमात्मा प्रवचनेनलभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥' अगासीदपि भगवान्—तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते ।" किञ्च—'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ।' 'पुरुषः सः परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।' यत्—ब्रह्म मां प्रति पृच्छन्नपि अतीव हृष्यसि = प्रसन्नो भवसि । अभिषङ्गेणेति पाठे सनिर्बन्धमित्यर्थः । हि = यतः, संकल्पात्मिकायां बुद्धौ विलीने = प्रलीने मनसि प्रचिन्त्या = तैलधारावदविच्छिन्नस्मृतिसन्तानरूपा सा = उपनिषत्सु प्रसिद्धा ब्रह्मविद्या अष्टाङ्गस्य मैथुनस्य परित्यागरूपेण ब्रह्मचर्येण द्वारा लभ्या = प्राप्या वर्तते ।

अनु०—मुझसे जिसे पूछते हुए तुम फूले नहीं समाते उस ब्रह्म को शीघ्रता करने वाला पुरुष नहीं प्राप्त कर सकता । क्योंकि संकल्पात्मिका बुद्धि में विलीन मन में ध्यातव्य ब्रह्मविद्या की प्राप्ति ब्रह्मचर्य के द्वारा होती है ।

पुनः धृतराष्ट्रः शंकते—

धृतराष्ट्र उवाच— धृतराष्ट्र ने कहा—

अत्यन्तविद्यामिति यत्सनातनीं, ब्रवीपि त्वं ब्रह्मचर्येण सिद्धाम् ।
अनारभ्यां वसतीह कार्यकाले कथं ब्राह्मण्यममृतत्वं लभेत ॥

मर्मभेदिनी—अन्तम् = त्रिविधपरिच्छेदमतिक्रान्तं अत्यन्तम् =



ब्रह्म तद्विषयिणी विद्याम् = अत्यन्तविद्याम् = ब्रह्मविद्यामिति यमित् ।

ब्रह्मचर्येण सिद्धाम् = लभ्याम्, अनारम्याम् = कर्मवदारंभायोग्याम् = यत् सनातनीम् = शाश्वतीम् त्वम् ब्रवीषि, सा च कार्यकाले कार्यान्तरे इह आत्मन्येव वर्तते, तस्याः सिद्धत्वात् एवं सति उपासकः कथं ब्राह्मण्यम् अमृतत्वं = मोक्षम् लभेत ।

अनु०–जिस ब्रह्मविद्या को आप नित्यसिद्ध तथा अनारम्य बतलाते हैं उसके द्वारा उपासक मोक्ष को कैसे प्राप्त कर सकता है ?

अत्र समाधत्ते—

सनत्सुजात उवाच– सनत्सुजात् ने कहा-

अव्यक्तविद्यामभिधास्ये पुराणीं बुद्ध्या च तेषां ब्रह्मचर्येण सिद्धाम् ।
यां प्राप्यैनं मर्त्यलोकम् त्यजन्ति या वै विद्या गुरुवृद्धेषु नित्या ॥४॥

मर्मभेदिनी–पुराणीम् = प्राचीनाम् तेषाम् = मुमुक्षूणाम्, बुद्ध्या = ध्यानरूपिण्या ब्रह्मचर्येणचसाधनेन सिद्धाम् लभ्याम्, अव्यक्तविद्याम् = ब्रह्मविद्याम्, अभिधास्ये = वक्ष्यामि, याम् प्राप्य जीवाः एनम् संसारबन्धरूपम्, मर्त्यलोकम् त्यजन्ति = संसारबन्धाद्विनिर्मुक्तत्वात् वै = निश्चयेन, या ब्रह्मसंबन्धिनी विद्या गुरुवृद्धेषु = गुरुणा विद्याप्रदानादिना वर्द्धितेषु शिष्येषु नित्या = नियता ।

अनु०–प्राचीन तथा मुमुक्षु जीव जिसे ध्यान एवम् ब्रह्मचर्य के द्वारा प्राप्त करते हैं, जिसे प्राप्त कर जीव संसार के बन्धन से मुक्त हो जाते हैं तथा जो आचार्य परम्परा के द्वारा सुरक्षित है, उस ब्रह्मविद्या को मैं तुम्हें बतलाऊँगा।

पुनः ब्रह्मचर्यस्य स्वरूपविषये शंकते—

नू०--धृतराष्ट्र उवाच– धृतराष्ट्र ने कहा—

मू०–ब्रह्मचर्येण या विद्या शक्या वेदितुमञ्जसा ।
तत्कथं ब्रह्मचर्यं स्यादेतद् ब्रह्मन् ब्रवीहि मे ॥५॥

मर्मभेदिनी–ब्रह्मन् = सनत्सुजात, या ब्रह्मसंबन्धिनी विद्या, ब्रह्मचर्येण द्वारा अञ्जसा = सुलभतया, वेदितुम् शक्या तत् ब्रह्मचर्यम् कथम् = किम्प्रकारकम् स्यादित्येतत् मे = मह्यम् ब्रवीहि ।

अनु०–हे ब्रह्मन् जिस ब्रह्मचर्य के द्वारा ब्रह्मविद्या जानी जाती है, उस ब्रह्मचर्य का स्वरूप मुझे बतलाएँ ।

मुमुक्षुणा गुरूपसदनस्य लौकिक पारलौकिकञ्च फलं प्राह—

मू०–सनत्सुजात उवाच— सनत्सुजात ने कहा—

मू०–आचार्ययोनिमिह ये प्रविश्य भूत्वा गर्भं ब्रह्मचर्यं चरन्ति ।
इहैव ते शास्त्रकारा भवन्ति प्रहाय देहं परमं यान्ति योगम् ॥६॥

मर्मभेदिनी–ये = मुमुक्षवः, इह = अस्मिन् लोके संसाराद्विरक्तास्सन्तः आचार्ययोनिम् प्रविश्य = 'समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इत्युक्तरीत्या आचार्यमुपसद्य, सर्वविधया शुश्रूषया गर्भं भूत्वा = आचार्यस्यातिस्निग्धः शिष्यो भूत्वा, ब्रह्मचर्यं चरन्ति = ब्रह्मचर्यस्य पालनं कुर्वन्ति ते तु इहैव = अस्मिन्नेव लोके, शास्त्रकाराः = याज्ञवल्क्यमनुवाल्मीकिसदृक्षाः शास्त्रस्य कर्तारो भवन्ति किञ्चान्तकाले इमं पाञ्च भौतिकं देहं विहाय परमं सत्यम् मोक्षमुपयान्ति ।

अनु०–जो मुमुक्षु सेवा तथा अध्ययन के द्वारा आचार्य के सन्निकट में रहकर उनका स्निग्ध शिष्य हो जाते हैं तथा ब्रह्मचर्य का पालन करते हैं। वे इस लोक मे शास्त्रकार हो जाते हैं तथा अन्त में मोक्ष प्राप्त कर लेते हैं ।

किञ्च—

मू०–अस्मिँल्लोके विजयन्तीह कामान् ब्राह्मींस्थितिं ह्यनुतितिक्षमाणाः
त आत्मानं निर्हरन्तीह देहान्मुञ्जादीषिकामिव सत्त्वसंस्थाः ॥७॥

मर्मभेदिनी–ते = मुमुक्षवः, अस्मिन् लोके कामान् विजयन्ति,

ये जितकामाः सन्ति ते ब्राह्मीं स्थितिम् लभन्ते । विवेकादीनां पालनेन सात्त्विकतमास्ते देहात् = देहेन्द्रियमनः प्राणधीभ्यः ध्यानयोगेन द्वारा आत्मानम् = ज्ञातारम् मुञ्जादीषिकामिव निर्हरन्ति = पृथक् कुर्वन्ति ।

अनु०—वे मुमुक्षु जीव अपनी लौकिक सभी कामनाओं को जीत कर अनुदिन ब्राह्मी स्थिति में रहते हुए ध्यान योग के द्वारा देह इन्द्रिय मन, प्राण तथा ज्ञान से भिन्न ज्ञाता आत्मा का साक्षात्कार कर लेते हैं ।

मू०—शरीरमेतौ कुरुतः पिता माता च भारत ।
आचार्यशास्ता या जातिः सा पुण्या साऽजराऽमरा । ८॥

मर्मभेदिनी—भारत = हेधृतराष्ट्र एतौ पिता माता च = मातापितरौ, शरीरम् = इदं पाञ्चभौतिकं कुरुतः = जनयतः । आचार्यः = गुरुः शास्ता उपदेष्टा यस्यां सा जातिः = जन्म सा जनिः पुण्या = पवित्रतमा अजरामरा = जरामरण रहिताच भवति । अयमाशयः—मातृपितृभ्यां तु शरीरमेवजायते । परन्तु आचार्येण तू यज्ज्ञानरूपं जन्म जायते तत्तु महत्तम भवति । यतः शरीरं तु जातं विनश्यति किन्तु ज्ञानेन तु मोक्षोऽवाप्यते । अतएव प्रश्नोपनिषदि श्रूयते—त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि । 'इति ऋषिरापस्तम्बोऽप्याह 'सहि विद्यातस्तं जनयति तच्छ्रेष्ठ जन्म शरीरमेव मातापितरौ जनयतः ।' इति ।

अनु०—धृतराष्ट्र माता पिता तो इस शरीर को उत्पन्न करते हैं किन्तु आचार्य के उपदेश से जो ज्ञान का जन्म होता है वह पवित्र तथा जरामरण रहित है ।

गुरवे न द्रुह्येत् कदाचिदपि—

मू०—यः प्रावृणोत्यवितथेन वर्णावृतं कुर्वन्नमृतं संप्रयच्छन् ।
तं मन्येत पितरं मातरञ्च तस्मै न द्रुह्येत् कृतमस्य जानन् ॥९॥

मर्मभेदिनी-यः = आचार्यः, वाचा ऋतम् = सत्यं ब्रह्माविष्कुर्वन् अमृतम् = मोक्षम् संप्रयच्छन् = ददन् वर्णान् = ब्राह्मणक्षत्रियादीन् प्रावृणोति = रक्षति तम् = आचार्यम्, पितरं मातरञ्च = मातापितृ तुल्यम् पूजनीयम् मन्यते अस्याचार्यस्य कृतमुपकारम् जानन् = अवगच्छन् कदाचिदपि तस्मै न द्रुह्येत् ।

अनु०—जो आचार्य वाणी द्वारा सत्य ब्रह्म को आविष्कृत कर के मोक्षप्रदानपूर्वक सभी वर्णों की रक्षा करते हैं, उनके उपकार का स्मरण करते हुए कभी उनसे द्रोह नहीं करना चाहिये ।

ब्रह्मचर्यस्य प्रथमं पादमाह—

मू०-गुरुं शिष्यो नित्यमभिवादयीत स्वाध्यायमिच्छेच्छुचिरप्रमत्तः ।
मानं न कुर्यान्नादधीत रोषमेषः प्रथमो ब्रह्मचर्यस्य पादः ॥१०॥

मर्मभेदिनी—मुमुक्षुः विद्यामधिगन्तुं गुरोः सुश्रुषया तस्यान्तरङ्गो शिष्यो भवेत् । गुरुकुले निवसन् ब्रह्मचर्यस्य च पालनं कुर्यादित्युक्तम् । इदानीं ब्रह्मचर्यस्य प्रथमं पादं विश्लेषयति । तत्र प्रतिदिनं शिष्यः गुरोरभिवादनं कुर्यात् प्रातः काले । शुचिः = बाह्याभ्यन्तरशुद्धः, अप्रमत्तः = सावधानः सः शिष्यः, स्वाध्यायम् = सांगानाम् सशिरस्कानां वेदानां श्रवणमननादिकम् इच्छेत् = वाञ्छेत् । कदाचिदपि गुरोः सेवायां मान न कुर्यात्, किञ्च संयोग वशात् गुरुणा तिरस्कृतोऽपि गुरुं प्रतिरोषं नहि कुर्यात्. एषः नियमः चतुष्पादात्मकस्य ब्रह्मचर्यस्य प्रथमः पादः ।

अनु०—शिष्य आचार्य को प्रतिदिन प्रणाम करे, पवित्र तथा सावधान होकर वेदाध्ययन करे । वह कभी भी न तो मान करे और न तो क्रोध करे । यही ब्रह्मचर्य व्रत का प्रथम चरण है ।

किञ्च—

मू०-शिष्यवृत्तिक्रमेणैव विद्यामाप्नोति यः शुचिः ।

ब्रह्मचर्यव्रतस्यास्य प्रथमः पाद उच्यते ॥

मर्मभेदिनी—शिष्यवृत्तिः—'समित्पाणिना गुरोरुपसर्पणम्, सायं प्रातर्भिक्षणेनजीवनमित्यादिः तस्या क्रमेणैव यः शुचिःवाह्याभ्यन्तर शौचाचारपरायणः पुरुषः सत्सन्तानप्रसूतस्य सदाचारनिष्ठस्य वेदविद आचार्यस्य सविधे विद्यामपरांपराञ्च, आप्नोति = प्राप्नोति अनेन प्रकारेण विद्याधिगम एव अस्य ब्रह्मचर्यव्रतस्य प्रथमः प्रादः प्रोच्यते।

अनु०—बाह्य एवं आभ्यन्तर शौच का पालन करते हुए जो पुरुप शिष्य वृत्ति से विद्या प्राप्त करता है, वही उसके ब्रह्मचर्य व्रत का प्रथम पाद है।

अथ ब्रह्मचर्यव्रतस्य द्वितीयं पादमुच्यते द्वाभ्यां श्लोकाभ्याम्—

सू०—आचार्यस्य प्रियं कुर्यात् प्राणैरपि धनैरपि'

कर्मणा मनसा वाचा द्वितीयः पाद उच्यते ॥१२॥

समा गुरौ यथावृत्तिः गुरुपत्न्यां तथाऽचरेत् ।

तत्पुत्रे च तथा कुर्वन् द्वितीयः पाद उच्यते ॥१३॥

मर्मभेदिनी—शिष्यःअन्तरङ्गेण प्राणेन बहिरङ्गेणधनेन च = शुश्रुषया, धनव्ययेन च मनसा, वाचा, कर्मणा च चिन्तनव्याहारक्रियाभिरित्यर्थः। आचार्यस्य = गुरोः प्रियमनुकूलं कार्यं कुर्यात्। किञ्च तस्य गुरौ = आचार्ये यथा = यादृशो, समा = आर्जवविनययुक्ता वृत्तिः व्यवहारो भवति तथैव सः गुरुपत्न्याम् गुरोः पुत्रे चाचरणं कुर्यात्। इत्थम् तस्याचरणमेव ब्रह्मचर्यव्रतस्य द्वितीयः पाद उच्यते ॥१२॥ १३॥

अनु०—शिष्य आचार्य को श्रम तथा वित्त के द्वारा आचार्य की सेवा करते हुए मनसा,वाचा,कर्मणा आचार्य के प्रिय कार्य को करना चाहिए। वह जिस तरह आचार्य से आर्जव एवं विनय पूर्वक व्यवहार करता है उसी प्रकार का उसे गुरुपत्नी तथा गुरु पुत्र के साथ

भी व्यवहार करना चाहिये, यह उसके ब्रह्मचर्यव्रत का दूसरा पाद है।

प्राप्तविद्यो विद्यासुखेन हृष्यन् आचार्यं यदत्यन्तं सम्मानयति तदेव ब्रह्मचर्यस्य तृतीयः पादः---

सू०—आचार्येणात्मकृतं विजानन् ज्ञात्वाऽचार्थं भावितोस्मीत्यनेन । यन्मन्यते तं प्रति हृष्टबुद्धिः स वै तृतीयो ब्रह्मचर्यस्य पादः ॥१४

मर्मभेदिनी—आचार्येण, आत्मकृतम् = स्वस्मै उपकृतम् विजानन् तेन आचार्येण विद्याधिगमं, ज्ञात्वा तस्य विद्याधिगमस्य अर्थम् = फलम् दुःखनिवृत्तिसुखावाप्तिरूपं च ज्ञात्वा आचार्येणाहं भावितः वर्द्धितोऽस्मीति मत्वा यत् तम् आचार्यं प्रति हृष्टबुद्धिर्भवति स एव ब्रह्मचर्यव्रतस्य तृतीयः पादोऽस्ति ।

अनु०—आचार्य द्वारा किये गये विद्या प्रदान रूपी उपकार उसके द्वारा दुख की निवृत्ति तथा सुख की प्राप्ति एवं अपनी अभिवृद्धि जानकर अत्यन्त प्रसन्नता पूर्वक आचार्य का सम्मान करना ही ब्रह्मचर्य का तृतीय पाद है ।

ब्रह्मचर्यस्य चतुर्थं पादमाह --

सू०—नाचार्यस्यानपाकृत्य प्रवासं प्राज्ञः कुर्वीत नैतदहं करोमि । इतीव मन्येत न भाषयेत स वै चतुर्थो ब्रह्मचर्यस्य पादः ॥१५॥

मर्मभेदिनी—प्राज्ञः आचार्यस्य विद्याप्रदानरूपमृणमनपाकृत्य = अपरिहृत्य प्रवासम् = गुरोर्गृहं विहाय अन्यत्र स्थाने आश्रमे वा स्थितिं न कुर्यात् । दत्त्वा च गुरुदक्षिणाम् एतद् गुरवे धनमहं प्रददामीति न तु मनसा मानयेत् न व भापयेत = वदेदित्यर्थः अत्र स्वार्थे णिच् । अयमेव ब्रह्मचर्यस्य चतुर्थः पादः ।

अ०—शिष्य को चाहिये कि गुरुदक्षिणा दिये बिना आचार्य गृह को छोड़कर कहीं जाय गुरुदक्षिणा देकर मन मे यह न सोचे कि मैंने आचार्य को

वन दिया है, और न तो उसे कहीं-कहे ही। यह ब्रह्मचर्यव्रत का चतुर्थ पाद है।

चतुष्पादेनब्रह्मचर्येण लभ्याम् चतुष्पादीं विद्यामाह—

मू०—कालेन पादं लभते तथार्थम् ततश्च पादं गुरुयोगतश्च ॥
उत्साहयोगेन च पादमृच्छेच्छास्त्रेण पादञ्च ततोऽभियाति ॥१६॥

मर्ममेदिनी—चतुष्पादेनब्रह्मचर्येण शिष्यः कालेन बुद्धिपरिपाकद्वारा चतुष्पाद्याः विद्यायाः एकम् पादम् लभते विद्यायाः अपरम् पादं सः सदाचार्यस्य संयोगादेव लभते। अन्यम् पादम् सः उत्साहयोगेन = बुद्धिवैभवेन प्राप्नोति। अवशिष्टम् चतुर्थं पादम् सः शास्त्रेण = सहाध्यायिभिः सह शास्त्रविचारेण द्वाराऽधिगच्छति।

अनु०—चतुष्पाद ब्रह्मचर्य का पालन करने वाला शिष्य बुद्धिपरिपाक, सदाचार्य की प्राप्ति, विद्यावैभव तथा साथियों के साथ शास्त्र विचार इन चार साधनों से विद्या के चार पादों को प्राप्त करता है।

अनुष्ठितं ब्रह्मचर्यव्रतं कथं फलवीत्याह—

मू०—धर्मादयो द्वादशयस्य रूपमन्यानि चाङ्गानि तथा बलञ्च।
आचार्ययोगे फलतीति चाहुः ब्रह्मार्थयोगेन च ब्रह्मचर्यम् ॥१७॥

मर्ममेदिनी—यस्य ब्रह्मचर्यस्य धर्मादयो द्वादश गुणाः रूपम् = स्वरूपभूतास्सन्ति अन्यानि = षड्विधत्याग-दम-त्याग-अप्रमादादीनि उपयुक्तानां धर्माणां परिपालनस्य सामर्थ्यरूपम् बलञ्च, अङ्गानि सन्ति तद्ब्रह्मचर्यव्रतम् सदाचार्यसंयोगे सत्येव फलति। आहच श्रुतिः—'आचार्याद्देव विदिता विद्या साधिष्ठं प्रापत' 'आचार्यवान् पुरुषोवेद' इत्यादिकम्॥ किञ्च—ब्रह्मार्थयोगेन, ब्रह्मेव अर्थः प्रयोजनम् तस्य योगेन संबन्धेन च फलतीत्याहुः पूर्वाचार्या इति शेषः।

अनु०—धर्मादि बारह गुण, छह प्रकार के त्याग, दम, त्याग,

अप्रमाद तथा व्रतानुष्ठानोपयोगी सामर्थ्य जिसके अंग हैं, वह ब्रह्मचर्य सदाचार्यकी प्राप्ति तथा ब्रह्म प्राप्तिके द्वारा सफल होता है।

विद्यामध्येतुम् गुरोर्गृहेनिवसन् सच्छिष्यः सकलमुपलब्धं धनं आचार्याय प्रयच्छति, गुरुपुत्रे च गुरुमिव व्यवहरतीत्याह—

मू०—एवं प्रवृत्तो यदुपालभेत वै धनमाचार्याय तदनु प्रयच्छेत् ।
सतां वृत्तिं बहुगुणामेवमेति गुरोः पुत्रे भवति च वृत्तिरेषा ॥१८॥

मर्मभेदिनी—एवम् = उपर्युक्तप्रकारेण ब्रह्मचर्यव्रतानुष्ठाने प्रवृत्तः = व्यापृतः सच्छिष्यः यत्किञ्चिदपिधनम् उपलभेत = प्राप्नुयात् तदखिलमेव धनम् तदनु = प्राप्तेरनन्तरम् आचार्याय प्रयच्छेत् = दद्यात् । इत्थं कुर्वन् सः सताम् = सज्जनानाम्, बहुगुणम् = अनेकैः सद्गुणैः समन्विताम्, वृत्तिम् = चर्याम् एति = प्राप्नोति, किञ्च तस्य गुरोः पुत्र विषयेऽपि एषा = समादरयुक्ता, वृत्तिः = प्रवृत्तिर्भवति ।

अनु०—इस तरह ब्रह्मचर्यव्रत का पालन करने वाला शिष्य प्राप्त धन को प्राप्ति के पश्चात् आचार्य को देकर-सज्जनाभिमत अनेक सद्गुणों से समन्वित होता है। आचार्य पुत्र के प्रति भी वह आचार्य के समान ही व्यवहार करता है।

ब्रह्मचर्यव्रतस्य पालकः, शिष्यः समृद्धेः काष्ठां चुम्बतीत्याह—

मू०—एवं वसन् सर्वतो वर्धतीह बहून् पुत्रान् लभते च प्रतिष्ठाम् ।
वर्षन्ति चास्मै प्रदिशो दिशश्च वसन्त्यस्मिन् ब्रह्मचर्ये जनाश्च ।।

मर्मभेदिनी—एवम् = अनेन प्रकारेण आचार्यायसर्वं ·। प्रयत्न पूर्वकं ब्रह्मचर्ये वसन् शिष्यः, सर्वतः प्रकारेण, इह अस्मिन् लोके, वर्धति = वर्धते । गृहस्थाश्रमे प्रविश्य सः बहून् पुत्रान् सज्जनसम्मान्यां प्रतिष्ठाञ्च लभते । अस्मै पुरुषाय प्रदिशोदिशः = दिशो विदिशः जनाश्च धनैः वर्षन्ति ।

अनु०—ब्रह्मचर्यव्रत का पालन करने वाला शिष्य हर प्रकार से उन्नति करता है। वह लोक में अनेक पुत्रों तथा प्रतिष्ठा को प्राप्त करता है। दिशाएं तथा लोग उसके लिए धनकी वर्षा करते हैं।

ब्रह्मचर्यस्य सर्वकामदुघत्वरूपाम् फलस्तुति करोति—

मू०-एतेन ब्रह्मचर्येण देवा देवत्वमाप्नुवन् ।
ऋषयश्च महाभागा ब्रह्मलोकं मनीषिणः ॥२०॥
गन्धर्वाणामनेनैव रूपमप्सरसामभूत् ।
एतेन ब्रह्मचर्येण सूर्योऽप्यह्नाय जायते ॥२१॥

मर्मभेदिनी—एतेन—उपर्युक्तेषु श्लोकेषु प्रोक्तेन ब्रह्मचर्यव्रतनेव देवाः—देवत्वम् = अमृतत्वम्, आप्नुवन् = प्राप्तवन्तः। किञ्च महाभागाः मनीषिणः = मनसो ईशनशीलाः निगृहीतमानसाः क्रान्तदर्शिनः ऋषयः ब्रह्मलोकमापुः। अनेनैव अनुष्ठितेन ब्रह्मचर्यव्रतेन गन्धर्वाणाम्। अप्सरसश्च अत्यन्त मनोज्ञ सर्वलोकप्रसिद्धं रूपमभूत्। एतेन चतुष्पादेनब्रह्मचर्येण चसूर्योऽपि अहनाय = जगताम् द्योतनाय जायते = समर्थो भवति। इत्थं सर्वकामदुघमास्ते ब्रह्मचर्यम्।

अनु०—इस ब्रह्मचर्य के द्वारा देवताओं ने देवत्व को, महाभाग संयमी ऋषियों ने ब्रह्मलोक को तथा गन्धर्वों एवम् अप्सराओं ने जगत् प्रसिद्ध रूपको प्राप्त किया। सूर्य ब्रह्मचर्य के द्वारा ही जगत् को प्रकाशित करते हैं।

एकमेव ब्रह्मचर्यव्रतमधिकारिभेदाद् भिन्नं-भिन्नं फलतीति निदर्शनमुखेन प्राह—

मू०—आकाङ्क्षयार्थस्य संयोगाद्रसभेदार्थिनामिव।
एवं ह्येते समाज्ञाय तादृग्भावं गता इमे ॥२२॥

मर्मभेदिनी—रसभेदार्थिनामिव ... [illegible]

विशेषः, अर्थिनाम् = लिप्सूनाम् अकांक्ष्यार्थस्य-अभिलषितस्य विषय· यस्य, संयोगात् = संबन्धात् यथा येन प्रकारेण भिन्नं-भिन्नं फलं ददाति तथैव ब्रह्मचर्यमपि कामिनां सर्वान् कामान् पूरयतीति एते देवऋषि गन्धर्वादयः समाज्ञाय ज्ञात्वा, तादृभावं गताः-देवत्व, सत्य लोक प्रकाशकत्व रूपातिशयत्वस्य काष्ठायाश्च प्राप्तिम् अकार्षुः।

अनु०-जिस तरह चिन्तामणि अभिलषुक व्यक्तियों की भिन्न भिन्न कामनाओं को पूर्ण करता है उसी तरह से ब्रह्मचर्य के द्वारा भी सभी अभिलषित अर्थों की प्राप्ति होती है, यह जानकर देवता ऋषि गन्धर्व आदि साधकों ने देवत्व, सत्यलोक तथा रूपा· तिशय्य की प्राप्त की।

ब्रह्मचर्येणैव मोक्षोधिगम्यते इति प्राह—

मू०-य आश्रयेत् पावयेच्चापि राजन् सर्वंशरीरम् तपसा तप्यमानः।
एतेन वै बाल्यमभ्येति विद्वान् मृत्युं तथा स जयत्यन्तकाले ॥२३

मर्मभेदिनी-यः-ब्रह्मचारी सर्वं चतुष्पादं ब्रह्मचर्यम् आश्रयेत् = पालयेत्, तप्यमानः सः पुरुषः तपसा = ब्रह्मचर्यव्रतपालनरूपेण शरीरमपीदं पाञ्चभौतिकम्, पावयेत्। वै = निश्चयेन, एतेन ब्रह्म-चर्यपालनरूपेण साधनेन विद्वान् = तत्वज्ञः, बाल्यम् = रागद्वेषादि-त्यागरूपम्, अभ्येति = प्राप्नोति। तथा सः = ब्रह्मचारी, अन्तकाले = शरीरपातस्य कालेसमुपस्थिते, अधिगतविद्यत्वात् मृत्यम् जयति = संसारवन्धंविहाय मोक्षमधिगच्छति ॥२३॥

अनु०—धृतराष्ट्र! ब्रह्मचर्यव्रत का पालन करने वाला पुरुष तपस्या को करते हुए इस पाञ्चभौतिक शरीर को भी शुद्ध कर लेता है। ब्रह्मचर्य के पालन द्वारा वह विद्वान् रागद्वेष से मुक्त होकर अन्त में मोक्ष प्राप्त कर लेता है ॥२३

अतत्त्वविदो यैः कर्मभिः कामलभ्यान् लोकाननुवन्ति तैरेव

निष्कामिनः अक्षय्यं ब्रह्म प्राप्नुवन्तीति प्राह–

मू०–अन्तवतः क्षत्रिय ते जयन्ति,लोकान्जनाः कर्मणा निर्मलेन ।
ब्रह्मैव विद्वान् तेन चाभ्येतिसर्वम् नान्यः पन्था अयनाय विद्यते ।२४

मर्मभेदिनी–क्षत्रिय = धृतराष्ट्र अनात्मज्ञाः पुरुषाः येन निर्मलेन = यजनोपासनध्यानादिरूपेण कर्मणा अन्तवतः = यत्र काम्य–कर्मलभ्यान् तान् तान् भोगान् भुक्त्वा पुनः मर्त्यलोकं विशन्ति तान् लोकान् प्राप्नुवन्ति । तेनैव कर्मणा सर्वथा रागद्वेषेभ्यो रहितत्वात् विद्वान् सर्वम् ब्रह्मात्मकं ज्ञात्वा ब्रह्मप्राप्तिरूपम् मोक्षमधिगच्छति । आत्मज्ञानेनातिरिक्तं मोक्षाधिगमस्य उपायो नास्ति ।

अनु०–धृतराष्ट्र जिन निर्मल कर्मों के द्वारा अनात्मज्ञ जीव क्षय्य लोकों को प्राप्त करते है , आत्मज्ञ पुरुष उन्हीं कर्मों को करके ब्रह्म प्राप्ति रूपी मोक्ष को प्राप्त करते हैं । अतएव आत्मज्ञान ही मोक्ष का साधन है ।

'नान्यः पन्था अयनाय विद्यते' 'तूष्णीं भूत उपासीत न चेष्टेन्मनसाऽपि च । उपावर्तस्व तद्ब्रह्म अन्तरात्मानि विश्रुतम्' । इति प्रागुक्तप्रकारेण आत्मानमनुसन्दधानस्तमनवाप्य नानावर्णान् नाडी मार्गान् अन्तर्हृदये पश्यन् पृच्छति ।

मू०–धृतराष्ट्र उवाच –धृतराष्ट्र ने कहा–

अभाति शुक्लमिव लोहितमिवाथो कृष्णमथाञ्जनं काद्रवं वा ।
सद् ब्रह्मणः पश्यति योऽत्र विद्वान् कथं रूपं तदमृतमक्षरं पदम् २५

मर्मभेदिनी–सद् ब्रह्मणः यत् रूपम् अत्र = हृदये समाधावस्थाय विद्वान् = समधिगतविद्यः पुरुषः ध्यानयोगेन विशद विशदतरविशदतमतयाऽन्ततोऽपरोक्षयति तत् अमृतम् = मोक्षस्वरूपम् अक्षरमनव्ययम् पदम् = पदनीयम् प्रापणीयम् रूपम् कथम् = किम् प्रकारकमास्ते तत्

शुक्लवर्णम् आभाति, अथो लोहितम् = रक्तवर्णमाभाति अथवा आञ्जनं कृष्णम् आभाति वा अथवा काद्रवम् = धूम्रवर्णमास्ते । श्रूयन्ते च ब्रह्ममार्गेरूपाणि—"तस्मिन् शुक्लमुतनीलमाहुः, पिंगलं हरितम् लोहितञ्च । एषः पन्था ब्रह्मणा हानुवित्तस्ते नेति ब्रह्मवित् पुण्यकृत् तैजसश्च ॥" अस्मिञ्छ्लोके रूपविषयक एव प्रश्नः । यत्रेत्यनेनपदेनाधिकरणविषयकस्य प्रश्नस्यापादनं नोचितमाभाति 'उपावर्तस्व तद्-ब्रह्म अन्तरात्मनि विश्रुतम्' इत्यनेनैवाधिकरणस्योपदिष्टत्वात् ।

अनु०—तत्त्वज्ञ पुरुष इस हृदय में सच्छब्द वाच्य ब्रह्म के जिस अविनाशी, व्यापक तथा प्राप्य रूप का साक्षात्कार करते हैं उसका वह रूप कैसा है ? उजला, या लाल, या काला, या धूम्र वर्ण का ?

उत्तरमाह—

मू०—सनत्सुजात उवाच— सनत्सुजात ने कहा—

मू०—अभाति शुक्लमिव लोहितमिवाथो कृष्णमायसमर्कवर्णम् ।
न पृथिव्यां तिष्ठति नान्तरिक्षे नैतत्समुद्रे सलिलं बिभर्ति ॥२६॥

मर्मभेदिनी—ब्रह्मणो रूपम् शुक्लमिव आभाति, अथो = किञ्च लोहितम् = रक्तवर्णमिवापि आभाति किञ्च कृष्णम् आयसमिवापि आभाति, इत्थं भूतं ब्रह्मणो तद्दिव्यं रूपम् 'आदित्यवर्णं तमसः परस्तात् ।' इतिश्रुत्या वर्ण्यते । तस्य ब्रह्मणो रूपस्य विश्वरूपवैरूप्यमाह । तद् ब्रह्मणो विश्वरूपविलक्षणं रूपम् न तु पृथिव्यामुपलभ्यते, न वा अन्तरिक्षे न वा समुद्रस्य सलिले तदुपलभ्यते ।

अनु०—ब्रह्म का रूप उजला, लाल और काला भी है । वह सूर्य के समान देदीप्यमान है । ब्रह्म का दिव्यरूप न तो पृथिवी में मिलता है न तो अन्तरिक्ष में और न तो समुद्र के जल में ।

किञ्च—

मू०—न तारकासु न च विद्युदाश्रितं न चाभ्रेषु दृश्यते रूपमस्य ।
न चापि वायौ न च देवतासु नैतच्चन्द्रे दृश्यते नोत सूर्ये ॥२७॥
नैवर्क्षु तन्न यजुष्षु नाप्यथर्वसु न दृश्यते वै विमलेषु सामसु ।
रथन्तरे बार्हद्रथे वाऽपि राजन् महाव्रते नैव दृश्येत ध्रुवं तत् ॥२८॥

मर्मभेदिनी—तस्य परस्य ब्रह्मणः रूपम् नतु तारकासु = नक्षत्रेषु न च विद्युदाश्रितम् = विद्युति, न च अस्य रूपम् अभ्रेषु = मेघेषु, न चापि वायौ, न च देवतासु, न वा चन्द्रे न वा सूर्ये समुपलभ्यते । स्वेतरसमस्तवस्तुविलक्षणत्वात् ॥ २७॥ न च तद् रूपम् ऋग्वेदे न वा यजुर्वेदे न वा अथर्ववेदे, न वा सर्वदोषविरहिते सामवेदे समुपलभ्यते । न च तत् रथन्तरे न वा बार्हद्रथे समुपलभ्यते । रथन्तर-बार्हद्रथे च पृष्ठ्यसामनी । उपासकः महाव्रते यज्ञविशेषेऽपि नैव तद्दृश्येत् पश्येत् । तत् ब्रह्मणोरूपम् ध्रुवम् = नित्यमास्ते ॥२८॥

अनु०—ब्रह्म का वह रूप ताराओं विद्युत्, मेघ, वायु, चन्द्र, सूर्य, ऋग्वेद, यजुर्वेद, अथर्ववेद, सामवेद, रथन्तर बार्हद्रथ, तथा यज्ञ में नहीं देखा जा सकता । क्योंकि वह ब्रह्म का रूप नित्य है ।

ब्रह्मणोरूपस्य स्वेतरसमस्तवस्तुविलक्षणतामाह—

मू०—अपारणीयं तमसः परस्तात् तदन्तकोऽप्येति विनाशकाले ।
अणीयो रूपं क्षुरधारया समं महच्च रूपं तद्वै पर्वतेभ्यः ॥२९॥

मर्मभेदिनी—तमसः परस्तात् अत्यन्तप्रकाशस्वरूपम् दिव्यम् ब्रह्मणोरूपम् अखिलहेयप्रत्यनीकत्वादपारणीयमनतिक्रमणीयं विद्यते । विनाशकाले = प्रलयकाले समुपस्थिते तस्मिन् परब्रह्मणि अन्तकः = यमोऽपि एति लीयते । तत् अणीयः = दुर्लक्ष्यम्, समाधावस्थाय मनो निगृह्य अत्यन्तावहितेन ग्राह्यत्वात् क्षुरधारया समम् तत् पर्वतेभ्यो महत् वर्तते महतो महीयस्त्वात् ।

अनु०—परंब्रह्म का वह रूप अखिलहेयप्रत्यनीक प्रकाशस्वरूप अत्यन्त सूक्ष्म, अत्यन्त सावधान उपासक द्वारा ग्राह्य तथा अपने से भिन्न सभी वस्तुओं से महान् है। प्रलय काल में यम राज भी उसी में लीन हो जाते हैं।

मू०—सा प्रतिष्ठा तदमृतं लोकास्तद् ब्रह्म तद्यशः।
भूतानि जज्ञिरे तस्मात् प्रलयं यान्ति तत्र हि ॥३०॥

मर्मभेदिनी—ब्रह्मणस्तद्रूपमेव जगतः प्रतिष्ठा = आधारभूतम्। तदेव अमृतम् = अविनाशि तदेव लोकाः = लोक्यन्ते इति लोकाः अखिलं जगत्। तदेव ब्रह्म बृहत्त्वाद् बृंहणात्वाच्च तद्ब्रह्मेत्यभिधीयते'। इति ऋषिभिः वर्णितम् 'बृहति बृंहयति ब्रह्म'। इति श्रुतिः रपि वक्ति तदेव यशः वक्ति च श्रुतिः—'तस्यनाम महद्यशः।' तस्मादेव सृष्टिकाले समुपस्थिते सर्वाणि भूतानि जायन्ते, प्रलयकाले च तस्मिन्नेव सर्वाणि भूतानि लीयन्ते। आह च श्रुतिः—'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म।

अनु०—वह ब्रह्म का रूप ही जगत् का आधार, अविनाशी जगत्स्वरूप तथा यशः स्वरूप है। उसी से सभी उत्पन्न होते हैं तथा सभी उसीमें लीन हो जाते हैं।

इदानीमुपसंहरति अध्यायमिमम्।

मू०—अनामयं तन्महदुद्यतं यशो वाचो विकारं कवयो वदन्ति;
यस्मिन् जगत् सर्वमिदं प्रतिष्ठितं ये तद्विदुरमृतास्ते भवन्ति ।३१

मर्मभेदिनी—तत् ब्रह्म स्वरूपम् उद्यतम् = जगदाकारम् = तत् परं ब्रह्मण कार्यभूतम् अनामयम् निर्दोषम् यशः सर्वव्यापकत्वात् महत्। वाचो विकारम् = वाग्व्यवहार [illegible]

तथा चाह श्रुतिः- 'वाचारम्भणं विकारो नामधेयम् ।' तस्मिन् ब्रह्मणीदमखिलञ्जगत् प्रतिष्ठितमास्ते ॥ तथा भूतं तत् ब्रह्म, ये ब्रह्म तत्वज्ञा विदुः विदन्तीति ते अमृताः = मुक्ताः भवन्ति ॥

अनु०-परमात्मा का वह यश निर्दोष, जगत् स्वरूप तथा व्यापक है। क्रान्तद्रष्टा ऋषिगण परब्रह्म के कार्यभूत उसे वाग् व्यवहार पूर्वक बतलाते हैं। उसी में सम्पूर्ण जगत् प्रतिष्ठित है। उसे तत्वतः जानने वाले मुक्त हो जाते हैं।

इति श्रीमन्महाभारते उद्योगपर्वणि
सनत्सुजातपर्वणि चतुश्चत्वारिंशोऽध्यायः।
( तृतीयोऽध्यायः समाप्तः )

# अथ षट्चत्वारिंशोऽध्यायः

( अथचतुर्थोऽध्यायः )

अवधेयम्-यद्यपि श्रीमन्महाभारते सनत्सुजातीये दर्शने पञ्च अध्यायास्सन्ति, किन्तु इदानीन्तनिकैः व्याख्याकारैः एतदुक्त्वा पञ्च-चत्वारिंशोऽध्यायः अस्माद् ग्रन्थात् बहिष्कृतो यत् स्वामिना शंकराचार्येणास्याध्यायस्य व्याख्यैव नहि कृता। केचन तु मान्या अपि-विद्वांसः मूलंमहाभारतमनवलोक्य षट्चत्वारिंशत्तममेवाध्यायम् पञ्चचत्वारिंशत्तममध्यायमलेखिषुः, इति महतः कष्टस्य विषयः। अस्मिन् ग्रन्थे पञ्चचत्वारिंशोऽध्यायः परिशिष्टे संगृहीतोऽस्ति। एवअत्र षट्चत्वारिंश एवाध्यायो व्याक्रियते—

अस्मिन् अध्याये वेदान्तवेद्यस्य परस्य ब्रह्मणस्स्वरूपनिरूपणं करोति-

मू०—सनत्सुजात उवाच— सनत्सुजात ने कहा—

मू०—यत्तच्छुक्रं महज्ज्योतिर्दीप्यमानं महद्यशः ।
तद्वै देवा उपासते तस्मात् सूर्यो विराजते ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥१॥

मर्मभेदिनी–यद्ब्रह्म तुभ्यं मयोपदिष्टं तत् शुक्रम् विशुद्धसत्त्वमयत्वात् शुक्लम् अवदातं जगन्मूलञ्च, स्वेतरसमस्तप्रकाशकत्वाद् दीप्यमानम्, महज्ज्योतिः 'तस्य भासा सर्वमिदं विभाती'त्याह श्रुतिः। महद्यशः 'तस्यनाम महद्यशः'इति श्रुतिरभिधत्ते। इत्थं भूत यद् ब्रह्म तत् देवा उपासते। तस्मादेव सर्वप्रकाशकत्वात् ब्रह्मणः सूर्यो विराजते = शोभते। तम् = इत्थं भूतं सम्पूर्णैश्वर्यं वीर्यतेजश्शक्तिज्ञानबलैः सम्पन्न भगवन्तम्, सनातनम् शाश्वतम् परमात्मानम् योगिनः परमज्ञान रूपिण्या परयाभक्त्या पश्यन्ति योगिनः = सूरयः। 'सदापश्यन्तिसूरयः' इति श्रुतिरत्याह।

अनु०–पहले के चार अध्यायों में जिसका उपदेश मैंने किया है, वह जगन्मूल, जगत् प्रकाशक महान् यशस्वी है। देवता उसी की उपासना करते हैं। सूर्य उसीके द्वारा प्रकाशित होता है। उस षडैश्वर्यसम्पन्न सनातन परमात्मा का साक्षात्कार योगिजन किया करते हैं।

परंप्रकाशस्वरूपस्य परस्य ब्रह्मणः सृष्टेर्मूलत्वं सम्पूर्णस्य जगतो नियामकत्वञ्चाह—

मू०–शुक्राद्ब्रह्मप्रभवति ब्रह्मशुक्रेण वर्द्धते।
तच्छुक्रं ज्योतिषां मध्येऽतप्तं तपति तापनम्।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥२॥

मर्मभेदिनी–शुक्रस्वरूपात्–जगन्मूलादेव ब्रह्मणः सृष्टिकाले समुत्पन्ने ब्रह्म = जीवः प्रभवति = विभक्तनामरूपवान् भवति। तथा चाह श्रुतिः–' अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि।' अथवा ब्रह्म = ब्रह्मा हिरण्यगर्भः सृष्टिकाले समर्थो भवति। किञ्च शुक्रे-

णैव = परमात्मनैव प्रेरितम् ब्रह्म-प्रकृतिः वर्द्धते । तदेव शुक्रम् = ब्रह्म ज्योतिषाम् = सूर्यचन्द्रनक्षत्रादीनाम् मध्ये, सर्वश्रेष्ठं ज्योतिः । केनापि अतप्तम् = अप्रकाशितम् स्वेतरस्याखिलस्य प्रकाशकत्वात्, तपति । किञ्चेदमेव चिदचिदोः समानरूपेण नियामकत्वादखिलस्य तापनम् । तथा च श्रुतिः- भीषास्माद् वातः पवते भीषोदेति सूर्यः । भीषादिन्द्रश्चाग्निश्च मृत्युर्धावति पञ्चमः ।' इत्थम् भूतम् परमात्मानम् योगिनः सर्वेषां चिदचिदामात्मा रूपेणपश्यन्ति ।

अनु०-परमात्मा से ही जीव सृष्टि की आदि में विभक्त-नाम और रूप सम्पन्न होता है, ब्रह्मा सृष्टि करने में समर्थ होते हैं। प्रकृति अचेतन रूप में परिणत होती है । उस परमात्मा का योगीजन सबों की आत्मा रूप से साक्षात्कार करते हैं ।

इदानीम् 'द्वा सुपर्णा' इति मन्त्रे प्रोक्तमर्थमुपोद्वलयति—

मू.-अपोऽथ अद्भ्यः सलिलस्य मध्ये, उभौदेवौ शिश्रियातेऽन्तरिक्षे।
अतन्द्रितः सवितुर्विवस्वानुभौ विभर्ति सलिलं दिवञ्च ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥३॥

मर्मभेदिनी—सृष्टेरादौ ब्रह्मा अपः ससर्ज । तथा च भगवान् मनुः- 'अप एव ससर्जादौ' अथ तदनंतरम्, अद्भ्यः = अपोपलक्षितेभ्यः पञ्चीकृतेभ्यो महाभूतेभ्यः सलिलस्य सलिलोपलक्षितस्य पञ्चभूतात्मकस्य शरीरस्य मध्ये अन्तरिक्षे-हृदयाकाशे उभौ देवो = स्वभावतः अपहतपाप्मत्वादिदिव्यगुणसम्पन्नौ जीवेश्वरौ शिश्रियाते = वर्तेते । तयोर्मध्ये अतन्द्रितः = सर्वथा कर्मभोग विरहितः सवितुः = सूर्यस्यापि प्रकाशकः परमात्मा उभौ पृथिवीं दिवञ्च । अखिलंजगदिति यावत् । विभर्ति = दधाति पुष्णाति च । तथा च श्रूयते- 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः

पिप्पलंस्वादवत्यनश्नन्न्योऽभिचाकशीति ।" इति । इत्थं भूतं परमात्मानं योगिनः सर्वेषामन्तर्यामिरूपेण पश्यन्ति । 'आसध्रीची सविषूचीर्वसनाविति पाठे सः शुक्रसंज्ञकः परमात्मा आसध्रीचीः = दिशः विषूचीः उपदिशश्च विभर्तीति सुगमोर्थः ।

अनु०-सृष्टि की आदि में ब्रह्मा ने जलादि पञ्चभूतों की सृष्टि की । पञ्चीकृत पञ्चभूतों से पञ्चभूतात्मक शरीर उत्पन्न हुआ । शरीर के भीतर हृदयाकाश में आत्मा और परमात्मा का निवास है । कर्मबन्ध रहित परमात्मा ही सम्पूर्ण जगत् का आधार है । उस परमात्मा को योगिजन सर्वान्तर्यामी रूप से देखते हैं ।

उपर्युक्तमर्थमेवाह-

मू०-उभौ च देवौ पृथिवीं दिवञ्च दिशः शुक्रो भुवनं बिभर्ति ।
तस्माद् दिशः सरितश्च स्रवन्ति तस्मात् समुद्रा विहितामहान्तः ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥३॥

मर्मभेदिनी—शुक्रः = शुक्रशब्दवाच्य; सर्वेषाम् परमात्मनो व्यूहविभवान्तर्यामीरूपाणामपि कन्दभूतः परशब्दवाच्यः उभौ देवौ जीव तदन्तर्यामिणौ, पृथवीम् = पृथिव्युपलक्षितान्नधो लोकान् दिवञ्च = द्युपलक्षितान स्वरादिसप्तलोकान्, दशसंख्याका दिशः, भुवनम् अखिलम् विभर्ति = धारणं करोति । तस्मादेव शुक्रशब्दवाच्यात् सर्वा दिशः उद्भवन्ति सर्वाश्च गंगादयः सरितः स्रवन्ति = निसरन्तीति यावत् । तस्मादेव परब्रह्मणोः महान्तः समुद्राः विहिताः उद्भूता इत्यर्थः । वैश्वानरविद्यायां परमात्मनस्तेपु तेष्वङ्गेषु जगत स्तेषां तेषां वस्तूनां दृष्टिर्विहिता । योगिन इत्थंभूतं सर्वाधारं परमात्मानमपरोक्षयन्ति ।

अनु०—शुक्र शब्द वाच्य परब्रह्म ही जीव, उसके अन्तर्यामी

पृथिवी, द्युलोक, सम्पूर्ण भुवन तथा दिशाओं का आधार है। उस परमात्मा से ही दिशाएँ, नदियाँ तथा समुद्र उद्भूत हैं।

'आत्मानं रथिनं विद्धि'-इत्यादिकां काठकोक्तां श्रुतिमनुवदति-

मू०—चक्रे रथस्य तिष्ठन्तोऽध्रुवस्याव्ययकर्मणः ।
केतुमन्तं वहन्त्यश्वास्तं दिव्यमजरं दिवि ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥५॥

मर्मभेदिनी—अध्रुवस्य = नश्वरस्य, अव्ययकर्मणः = स्थिरकर्मतः, कर्मणां भोगं यावत् स्थिरत्वात् रथस्य = शरीरस्य 'रथः स्यन्दनदेहयोः' इति विश्वः। ' चक्रे = चंक्रमणे, अश्वाः, इन्द्रियाणि सुसयतानि तम् = उपर्युक्तगुणसम्पन्नम्, पुरुषम् दिव्यम् = स्वभावतोऽपहतपाप्मत्वादिगुणसहितम्, अजरम् = षड्भावविकाररहितम्, केतुमन्तम् = विज्ञानसरथिम् रथमधितिष्ठन्तम् जीवम् दिवि = वैकुण्ठे लोके वहन्ति = प्रापयन्ति तस्मिन् वैकुण्ठलोके विद्यमानं सर्व जगत्स्वामिनं योगिनः ध्यानयोगेन साक्षात्कुर्वन्ति।

अनु०—अनित्य, तथा भोग पर्यन्त बने रहने वाले, कर्मों से युक्त शरीर के चंक्रमण में रहने वाली इन्द्रियाँ सद्बुद्धि सम्पन्न स्वभावतःगुणाष्टक युक्त' षड्भावविकार रहित जीव को वैकुण्ठ लोक में पहुँचा देती हैं। उस वैकुण्ठ लोक के स्वामी परमात्मा का साक्षात्कार योगिजन ध्यानयोग के द्वारा कर लेते हैं।

सर्वथा समाभ्यधिकरहितम् वाङ्मनसयोरभूमिं भूमिश्च नतजनदृशामुपश्लोकयति परमात्मानम्-

मू०—न सादृश्ये तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनम् ।
मनीषयाऽथो मनसा हृदा च य एनं विदुरमृतास्ते भवन्ति ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥६॥

मर्मभेदिनी–अस्य रूपम् सादृश्ये न तिष्ठति अनुपममास्ते। श्रुतिरपि परमात्मनो रूपस्य समाभ्यधिकराहित्यमाह–'न तत्स-मश्चाभ्यधिकश्च दृश्यते।' इति। अकथयच्चार्जुनः–'न त्वत् समो-ऽस्त्यभ्यधिकः कुतोऽन्यः।' एनम् = परमात्मानम् चक्षुषा = प्राकृ-तैरिन्द्रियैः कश्चित् नहि द्रष्टुं प्रभवति। अगासीदपि भगवान्‌न 'नतु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा। दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्।' अथ = अतएव, मनीषया = पराभक्तिरूपिण्या, मनसा = विवेकादिसाधनसप्तकानुगृहीतेन, मनसा हृदा = ध्यानयोगेन च य एनम् प्राकृतेन्द्रियाणामभूमिं, नतजनदृशो भूमिं, समाभ्यधिक रहितम् ब्रह्म ये मनषिणो विदुः ते अमृताः = मुक्ताः भवन्ति। तथारूप परमात्मानम् परमज्ञानरूपिण्या भक्त्या पश्यन्ति योगिनः।

अनु०–निरूपम परमात्मा का रूप, प्राकृत चक्षुरादि इन्द्रियों का अविषय तथा भक्तों के ज्ञान नेत्र का विषय है। इस तरह से परमात्मा के रूप को जानने वाला पुरुष मुक्त हो जाता है। इस तरह के वैभव; सम्पन्न परमात्मा काभी योगिजन साक्षात्कार कर लेते हैं।

प्राप्यस्य परमात्मनस्स्वरूपादिज्ञानाभावेसंसरणं न विरमतीत्याह–

मू०–द्वादशपूगां सरितं पिवन्तो देवरक्षिताम्
मध्वीक्षन्तश्च ते तस्याः सञ्चरन्तीह घोराम्
योगिनस्तं प्रपश्यन्ति भगवन्तम् सनातनम् ॥७॥

मर्मभेदिनी–ते–श्रेयोमार्गाध्वनीनः प्राप्यादीनां स्वरूपादिज्ञान-पराङ्मुखाः इह = अस्मिन् जगति देवरक्षिताम्–परमात्मना रक्षि-ताम् एतस्याः परमात्मनो लीलाविभूतित्वात्। घोराम् = भयंकरीम् द्वादशसंख्याः पूगाः समुदाया यस्याम् ताम् द्वादशपूगाम्। तांश्च पूगानाहुः–

चित्तादिपूगः स्मरणादिपूगः श्रोत्रादिपूगः श्रवणादिपूगः ।
वागादिपूगः वचनादिपूगः शब्दादिपूगो विषयादिपूगः ।
प्राणादिपूगः श्वसनादिपूगः संस्कारपूगः सुकृतादिपूगः ।
एतैर्महापूगवरैर्जगत्यां नद्यामघश्चोपरि चेति जीवः ॥

सरितम्=संसारनदीम्, पिबन्तः तस्याः-संसारनद्याः मधु=मधुवद्विषयान् इच्छन्तः=वाञ्छन्तः सचरन्ति-संसरन्ति । योगिनः स्वस्वरूपज्ञानेनैव संसारबन्धविनाशकं भगवन्तं प्रपश्यन्ति ;

अनु०-अज्ञानी जीव द्वादश, १-चित्तादिपूग २-स्मरणादिपूग ३-श्रोत्रादिपूग, ४-श्रवणादिपूग, ५-वागादिपूग, ६-वचनादिपूग, शब्दादिपूग, ८-विषयादिपूग, ९-प्राणादिपूग १०-श्वसनादिपूग, ११-संस्कारपूग तथा १२-सुकृतादिपूग पूगों वाली परमात्म-रक्षित, भयंकर संसार नदी के विषयों के भोग की लालसा से संसरण करते रहते हैं । योगीजन तो स्वरूपज्ञान के द्वारा संसार प्रणाशक परमात्मा का साक्षात्कार कर लेते हैं ।

जीवकृतकर्मणां फलप्रदः परमात्मैवास्ते इत्याह—

मू०—तदर्धमासं पिबति सञ्चित्य भ्रमरो मधु ।
ईशानः सर्वभूतेषु हविर्भूतमकल्पयत् ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥८॥

मर्मभेदिनी—यथा भ्रमरः मधु सञ्चित्य तद् अर्धमासं यावत् अर्धं मधु पिबति तथैव भ्रमरः विविधयोनिषु भ्रमणशीलो जीवः कर्माणि सञ्चित्य तदर्धमासम् अर्द्धं मधुवद्विषयोपभोगं करोति । पूर्वजन्मार्जितं कर्म वर्तमाने जन्मनि भुंक्ते । एतज्जन्मकृतं कर्म भविष्यज्जन्मनि भुंक्ते । ननु लौकिककर्मणां तु फलसिद्धिः संभाव्यते किन्तु

जीवानां पूर्वकर्मानुसारेण सर्वलोकेषु फलव्यवस्था ईशानः = परमेश्वरः एव करोति । अतो नास्त्युपर्युक्तशंकाऽवकाशः । स एव जीवेभ्यः प्राणाग्निब्रह्मात्रादिरूपं कर्म अकल्पयत् । स फलेनैव इत्थं कर्म फलव्यवस्थापकं भगवन्तं योगिनः प्रपश्यन्ति ।

अनु०-जैसे भ्रमर अपने संचित मधु के आधे भाग को आधे मास में पीता है उस प्रकार जीव भी अपने पूर्व निर्मित कर्म का फल भोगता है। ईश्वर जीवों के कर्मानुसार उनके फलों तथा अन्नादि की व्यवस्था करता है । उस जीव-कर्म-व्यवस्थापक परमात्मा का साक्षात्कार योगिजन कर लेते हैं ।

'तमेव विदित्वातिमृत्युमेति' इति श्रुतेरर्थं प्राह--

मू०—हिरण्मयपर्णमश्वत्थमभिपद्य ह्यपक्षकाः ।
ते तत्र पक्षिणो भूत्वा प्रयतन्ति यथा दिशम् ॥
योगिनस्तं प्रपश्यंति भगवन्तं सनातनम् ॥६॥

मर्मभेदिनी-अपक्षकाः-अविद्वांसो हि विषयमध्यगिनः हिरण्यञ्च रमणीयञ्च पर्णं यस्याश्वत्थस्य तम् अभिपद्य = आरुह्य-वेदसंयोगि ब्राह्मणादिदेहं प्राप्येत्यर्थः । तत्रैव देहे ते पक्षिणः = तत्त्वज्ञाः भूत्वा प्रयतन्ति यथा दिशम् = स्वाभिप्रेते श्रेयोमार्गे प्रयत्नं कृत्वा मुक्ता भवन्ति । तथा च श्रुतिः-"ये वै विद्वांसस्ते पक्षिणः येऽविद्वांसस्ते अपक्षाः ।" यं ज्ञात्वा तत्त्वज्ञा मुक्ता भवन्ति तं भगवन्तं योगिनः प्रपश्यन्ति ।

अनु०-अनात्मज्ञ जीव ब्राह्मणादिदेहको प्राप्तकर जिस ब्रह्मतत्त्व को जानकर तथा तत्त्वज्ञ होकर मुक्त हो जाते हैं; उसका योगिजन साक्षात्कार कर लेते हैं ।



अखिलजगदुत्पादकस्य परस्य ब्रह्मणश्चेतनाचेतनेभ्यो ऽधिक्यमाह-

सू०—पूर्णात् पूर्णान्युद्धरन्ति पूर्णात्पूर्णानि चक्रिरे ।
हरन्ति पूर्णात् पूर्णानि पूर्णमेवावशिष्यते ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥१०॥

नर्मभेदिनी—पूर्णात् = व्यापकात्,परब्रह्मणः पूर्णानि = चिद्रूपाणि जीवा इति यावत्, उद्धरन्ति = पृथगभवन्ति । एवं सति परमात्मनः पूर्णत्वं नश्येत् इति चेत् न पूर्णात्परमात्मन एव पूर्णानि जीवरूपाणि चक्रिरे -- कृता इति यावत् । अथापि परमात्मनः पूर्णत्वं नापहीयते । इदमेव ब्रह्मणो वैशिष्ट्यमास्ते, यत् जीवाः पूर्णादेव ब्रह्मणः स्वानि पूर्णानि भागानि हरन्ति अथापि तत् पूर्णमेवावशिष्यते तत्र किमपि न्यूनत्वं नहि आयाति । इत्थंभूतम् स्वेतरसमस्तवस्तुविलक्षणं भगवन्तं योगिनः साक्षात्कुर्वन्ति ।

अनु०—पूर्ण ब्रह्म से उत्पन्न होने वाले जीव पूर्ण ही होते हैं और पूर्ण जीवों के निकल जाने पर भी वह ब्रह्म पूर्ण ही रहता है । उस परब्रह्म का योगीजन साक्षात्कार करते रहते हैं ।

सर्वाणि भूतानि सर्वेचदेवास्तस्मादेव परब्रह्मणः अजायन्त ।

सू०—तस्माद् वै वायुरायातः तस्मिँश्च प्रयतः सदा ।
तस्मादग्निश्च सोमश्च तस्मिँश्च प्राण आयतः ॥११॥
सर्वमेव ततो विद्यात्तद्वक्तुं न शक्नुमः ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥१२॥

मर्मभेदिनी—तस्मादेव परब्रह्मणः वायुः = वाद्वादीनि पञ्चभूतानि आयातः = उत्पन्नानीति यावत् । किञ्च तस्मिन् एव परस्मिन् ब्रह्मणि सः = सर्वव्यापको वायुःसदा = सर्वदा प्रयतः = निगृहीतो भवति । तस्मादेव अग्निसोमप्रभृतयः देवा उत्पद्यन्ते, तस्मिन्नेव प्राणः—पञ्च प्राणादिवायवः । आयतः = विस्तृतः । सर्वमेव अखिलमेव

जगत् ततः = तस्मादेव परब्रह्मणः उत्पन्नं विद्यात् । तत् प्रसिद्धं तत् = ब्रह्म 'तदिदमिमहतो भूतस्य नाम' कात्स्न्र्येन वक्तुमुपदेष्टुं न शक्नुमो वयम् । आह च श्रुतिः सम्पूर्णस्य जगतः ब्रह्मण उत्पत्तिम्— 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निरग्नेरापः अद्भ्यः पृथिवी ।' इत्थं सम्पूर्णजगत्कारणं परमात्मानं योगिनः अपरोक्षयन्ति ।

अनु०-वायु आदि पञ्चमहाभूत परब्रह्म से ही उत्पन्न तथा उसी में अधिष्ठित हैं । अग्नि, सोम, प्राण आदि उसी के कार्य हैं । सम्पूर्ण जगत् का कारण परब्रह्म ही है । उस परब्रह्म का कृत्स्नतो वर्णन असम्भव है । योगिजन सम्पूर्ण जगत् के कारण परमात्मा का हृदय में साक्षात्कार कर लेते हैं ।

योगसमाधौ अपानादीनां लयक्रममाह—

मू०—अपानं गिरति प्राणः प्राणं गिरति चन्द्रमाः ।
आदित्यो गिरते चन्द्रमादित्यं गिरतेपरः ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् । १३ ॥

मर्मभेदिनी-योगी यदासमाधावस्थितो भवति तदा प्राणः = प्राण वायुः अपानम् वायुं गिरति = उपसंहरति चन्द्राधिदेवत मनः प्राणमुपसंहरति । आदित्याधिदेवतवती बुद्धिः चन्द्रम् = मनः गिरते = उपसंहरति । परः = परमात्मा अन्तर्यामिरूपेणावस्थितः आदित्यम् = बुद्धि गिरते = उपसंहरति । इत्थम् अपानस्यप्राणे, प्राणस्य मनसि, मनसः बुद्धौ, बुद्धेश्च परमात्मनि लीने संजाते योगी ध्यानयोगमहिम्ना परमात्मानं विशदविशदतरविशदतमतयाऽन्ततो यथावदपरोक्षयति ।



अनु०-अपान को प्राण में, प्राण को मन में, मनको बुद्धि में

तथा बुद्धि का परमात्मा में लय हो जाने पर समाधिस्थ योगी परमात्मा का साक्षात्कार कर लेता है ।

उभयविभूतिनायकं परमात्मानं वर्णयति-

मू०—एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन् ।
तं चेत्संततमुर्ध्वाय न मृत्युर्नामृतं भवेत् ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। १४ ।।

मर्मभेदिनी—सलिलात् = संसारसमुद्रात्, उच्चरन् = उपरिविभ्रमानम्, हंसः = परमात्मा एकम् = लीलाविभूतिनामकम् पादम् स्वमहिम्नः, नहि, उत्क्षिपति = उद्धरति । तथा च श्रुतिः "पादोऽस्य विश्वा भूतानि, त्रिपादस्यामृतं दिवि ।' तम् चेत् संततं = विस्तृतम् जगद्रूपेण, उर्ध्वाय = उद्धरेत्—तदा बन्धमोक्षयोः कथैव नहि स्यात् । लीलाविभूतावेव बद्धानामवस्थानात् । त्रिपादविभूतावेव सत्याम् सर्वे नित्या मुक्ता एव जीवा भवेयुः । तथा भूतं परमात्मानं योगिनः अपरोक्षयन्ति ।

अनु०—संसार से उपर विद्यमान परमात्मा अपनी लीलाविभूति का उपसंहार नहि करता । यदि वह उसे उपसंहृत करले तो फिर बन्ध और मोक्ष के लिए कोई अवसर ही नहीं रहता । उस उभयविभूति नायक परमात्मा का योगिजन साक्षात्कार कर लेते हैं ।

नित्यं प्राप्तमपि अन्तर्यामिणं परमात्मानं अनात्मज्ञाः नहि पश्यन्तीत्याह—

मू० अंगुष्ठमात्रः पुरुषोऽन्तरात्मा लिङ्गस्य योगेन स याति नित्यम् ।
तमीशमीड्यमनुकल्पमाद्यं पश्यन्ति मूढा न विराजमानम् ।।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।।१५।।

मर्मभेदिनी—सः अंगुष्ठमात्रः—अंगुष्ठमात्रे हृदये विद्यमानत्वात्

अंगुष्ठमात्रः, आत्मापेक्षयान्तरङ्गत्वादन्तरात्मा पुरुषः = परमात्मा लिङ्गस्य शरीरस्य योगेन नित्यम् याति = गच्छति, जीवान् इति शेषः । तम्, ईशम् = नियामकम्, ईड्यम् = स्तुत्यम्, अनुकल्पम् = जीवेष्वनुप्रविश्य नामरूपविभागात्मना अनुकल्पयतीत्यनुकल्पम्, आद्यम् = आदीभवम् विराजमानम्-विशेषतश्शोभमानम् परमात्मानं मूढाः = अनात्मज्ञा जीवाः नहि पश्यन्ति : तथा भूतम् परमात्मानं योगिनः साक्षात्कुर्वन्ति हार्दाकाशे ।

अनु०-हृदयस्थित अन्तरात्मा परमात्मा लिङ्ग शरीरके माध्यम से नित्य ही प्राप्त होता है । नियामक, वदनीय, जीवों को नाम और रूपविभागार्ह करने वाले, आद्य पुरुष परमात्मा का योगिजन साक्षात्कार करते हैं ।

मु६-असाधना वापि ससाधना वा समानमेतद् दृश्यते मानुषेषु ।
समानमेतदमृतस्येतरस्य मुक्तास्तत्र मध्वउत्सं समापुः ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥१६॥

मर्मभेदिनी-असाधनाः = साधनहीनाः वापि ससाधनाः = साधनसम्पन्ना जीवा भवेयुः सर्वेषु, मानुषेषु एतत् परमात्मतत्त्वं समानम् = समानरूपेण दृश्यते । एतत् परमात्मतत्त्वं अमृतस्य, इतरस्य च कृते समानरूपेण भवति । अथापि ये मुक्ताः तीव्रेण भक्तियोगेन संसारपाशं प्रणाश्य मोक्षमधिगच्छन्ति ते तत्र श्रीमति वैकुण्ठलोके मध्वउत्सम् = परमात्मनः प्राप्तिरूपं भोगातिशयं प्राप्नुवन्ति । तं सर्वत्र व्यापिनं परमात्मानं योगिनः अपरोक्षयन्ति ।

अनु०-साधनविहीन तथा साधन सम्पन्न मनुष्यों में तथा देवताओं एवं मर्त्यों में अन्तर्यामी परमात्मा समान रूप से व्याप्त है । योगिजन उस परमात्मा का साक्षात्कार कर लेते हैं ।

मुक्तस्यकृत्याकरणमपि परिपूर्णं भवतीत्याह—

मू०-उभौ लोकौ विद्यया व्याप्य याति तदाहुतश्चाहुतमग्निहोत्रम् ।
मा ते ब्राह्मी लघुतामादधीत प्रज्ञानं स्यान्नामधीरा लभन्ते ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥१७॥

मर्मभेदिनी—आत्मज्ञः पुरुषः विद्यया = पराख्यया, उभौ लोकौ = इहलोकपरलोकौ व्याप्य, याति = मोक्षमधिगच्छति । यस्मात्कारणादुभौ लोकौ व्याप्य सो याति तस्मात् कारणात् तस्य तदा = मुक्तावधिगते अहुतमग्निहोत्रमपि हुतम् भवति ब्राह्मी = ब्रह्मसंबन्धिनी विद्या लघुताम् अल्पीयस्त्वम् मा = नहि आदधीत = तस्य परमात्मनः तमसः परस्त्वात् प्रज्ञानम् नाम स्यात् । तम् प्रज्ञान ब्रह्म धीरा लभन्ते । तथाभूतं भगवन्तं योगिनः प्रपश्यन्ति ।

अनु०-चूंकि मुक्त जीव पराविद्या के द्वारा दोनों लोकों को व्याप्त करके मोक्ष प्राप्त करता है । अतः उसके कृत्याकरण भी पूर्ण हो जाते हैं । तुममें ब्रह्म विद्या की कमी नहीं होनी चाहिये । ब्रह्म का नाम प्रज्ञान है । उसे मुक्त जीव ही प्राप्त करते हैं । उस परमात्मा का योगिजन साक्षात्कार कर लेते हैं ।

"अत्ताचराचरग्रहणा"दिति ब्रह्मसूत्रोक्तमर्थमाह—

मू०—एवं रूपो महात्मा सः पावकं पुरुषो गिरन् ।
यो वैतां पुरुषं वेद तस्येहार्थो नरिष्यते ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥१८॥

मर्मभेदिनी—एवम् रूपः = उपर्युक्त प्रकारकः उभयविभूतिनायकः, सम्पूर्णं जगत्कारणभूतः, मुक्तजीवैकलभ्यः सो महात्मा पुरुषः = परमात्मा, पावकम् = पावकोपलक्षितम् सचराचरम् जगत् गिरन् = उपसंहरन् आस्ते । तम् = चराचरस्यात्तारं पुरुषम् पर-


मात्मानं वै यः = मुमुक्षुर्यो वेद = जानाति इह = अस्मिन् लोके तस्य,

पुरुषस्य अर्थः = पुरुषार्थो न रिष्यति = नहि क्षीयते । इत्थंभूतम् परमात्मानं योगिनः प्रपश्यन्ति ।

अनु०—उपर्युक्त गुणों से युक्त सम्पूर्ण जगत् के भर्ता परमात्मा को जानने वाले मुमुक्षु जीवों के लौकिक सभी पुरुषार्थ सम्पन्न हो जाते हैं। उस परमात्मा का योगिजन साक्षात्कार कर लेते हैं।

परमात्मनः सर्वव्यापकत्वमुपोद्वलयति—

मू०—यः सहस्रं सहस्राणां पक्षान् संतत्य सम्पतेत् ।
मध्यमे मध्य आगच्छेदपि चेत्स्यान्मनोजवः ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥१९॥

मर्मभेदिनी—चेत् = यदि, मनोजवः अपि = मनस्सदृशवेगसम्पन्न अपि सहस्राणांसहस्रम् अनंतान् इत्यर्थः पक्षान् संतत्य = प्रसार्य सम्पतेत् = उडीयात् तदापि सः मध्यमे = हृदयस्य मध्ये विद्यमानस्य परमात्मनः, मध्ये एव स्यात् । परमात्मनस्सर्वव्यापकत्वात् । 'सभूमिं सर्वतः स्पृत्वाऽत्यतिष्ठद् दशाङ्गुलम्' इति श्रुतिरपि परमात्मन आभ्यन्तरे सर्वस्य विद्यमानतां प्राह। तं परमात्मानं सव योगिनः प्रपश्यन्ति ।

अनु०—मन के समान वेगवान जीव भी यदि अनन्त पंखों को भी फैलाकर उड़े तो भी वह परमात्मा के भीतर ही रहेगा । उस सर्वव्यापक परमात्मतत्त्व का योगिजन साक्षात्कार कर लेते हैं ।

भगवतस्स्वरूपमवाङ्मनोगोचरमिति ब्रूते—

मू०—न दर्शने तिष्ठति रूपमस्य पश्यन्ति चैनं सुविशुद्धसत्त्वाः ।
हितो मनीषी मनसा न तप्यते ये प्रव्रजेयुरमृतास्ते भवन्ति ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥२०॥

मर्मभेदिनी—अस्य = परमात्मनः दिव्यम् रूपम् दर्शने नतिष्ठति = चक्षुरादीनामिन्द्रियाणां विषयो न भवति । आह च श्रुतिः—न सदृशे

तिष्ठति रूपमस्य' इति । च = किन्तु सुविशुद्धसत्त्वाः = विवेकादि साधनसप्तकानुगृहीतमानसाः सात्त्विकतमाः पुरुषाः एनं = परमात्मानं पश्यन्ति = अपरोक्षयन्ति । हितः = जगन्मित्रम्, मनीषी = मनस ईशन-शीलः, किञ्च पुत्रवित्तादिनाशेऽपि मनसा न तप्यते = खिन्नो नहि-भवति तथाविधः । एतद्दृष्ट्वेषु ये प्रव्रजेयुः पुरुषाः ते अमृताः = मुक्ताः भवन्ति । इत्थमवाङ्मनोगोचरस्वरूपं भगवन्तं प्रपश्यन्ति ।

अनु०—परमात्मा के अवाङ्मनोगोचर रूपका भगवद्भक्त साक्षात्कार करते हैं । जगत् के मित्र, मनीषी तथा खेदरहित मुक्तात्मा मुक्त हो जाते हैं ।

विषयभोगासक्ताः जनाः संसारबन्धे पतन्ति ।

मू०—गूहन्ति सर्पा इव गह्वरेषु क्षयंनीत्वा स्वेन वृत्तेन मर्त्यान् ।
ते विप्रमुह्यन्ति जना विमूढा तैर्दत्ता भोगा मोहयन्ते भवाय ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥२१॥

मर्मभेदिनी—यथा सर्पा गह्वरेभ्यो निष्क्रम्य स्वेन वृत्तेन विष-प्रदानरूपेण द्वारा मर्त्यान् = जीवान् क्षयं नीत्वा = नाशयित्वा आत्मानं पुनः गह्वरेषु गूहन्ति तथैवेन्द्रियाणिश्रोत्रचक्षुरादिभ्यो गह्वरेभ्यो निष्क्रम्य विषयविषप्रदानेन मर्त्यान् नाशयित्वा पुनः श्रोत्रादि विलेषु आत्मानं गूहन्ति ते = विषयविषेण विमूढा जना विप्रमु-ह्यन्ति विषयविषभोगव्यतिरिक्तं किमपि नहि जानन्ति । तैर्दत्ताः = भोगाः भवाय संसारबन्धाय मोहयन्ते अनात्मज्ञान् जीवान् । तथा भूतं परमात्मानं योगिनः प्रपश्यन्ति ।

अनु०—जिस तरह विलों से निकलकर सर्प जीवों का डँसकर विलों में छिप जाते हैं, उसी तरह इन्द्रियां भी जीवों को विषय भोगरूपी विष प्रदानकर पुनः श्रोत्रादि छिद्रो में छिप जाते हैं । विषयभोगासक्त जीव संसार के बन्धन में बँध जाते हैं , योगिजन अपने साधन के द्वारा परमात्मा के दिव्यरूप का दर्शन किया करते हैं ।

जन्ममरणादिकमात्मनो नहि भवति। सर्वेषां मूलं परमात्मैव।

मू०-तस्मात् सदा सत्कृतः स्यान्न मृत्युर्नचामृत्युरमृतं मे कुतस्स्यात्।
सत्यानृते सत्यसमानबन्धे सतश्चयोनिरसतश्चैक एव॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥२२॥

मर्मभेदिनी-तस्मात् सदा सत्कृतः=परमात्मध्यानपरायणः स्यात् मनसि च चिन्तयेत् तत्त्वज्ञो यत् स्वभावत एव अपहतपाप्मत्वादिगुणाष्टकसम्पन्नोऽहम्। मम न तु मृत्युर्भवितुमर्हति न अमृत्यु र्भवति। अतोममामृतत्वमपि नहि सम्भवमास्ते। सत्यं=नित्यम् असत्यम्=अनित्यञ्च वस्तु सत्यमेव परमात्मानमाश्रित्य वर्तते। सदसतामूलमेकमेव परब्रह्मास्ते। इत्थं सर्वेषां मूलं परमात्मानं योगिनः प्रपश्यन्ति।

अनु०-अतएव मुमुक्षु परमात्मा के ध्यान में लगा रहे। उसे भावना करनी चाहिये कि, मरण, जन्म, देवत्व आदि आत्मा के धर्म नहीं हैं, ये शरीर के धर्म हैं। नित्य और अनित्य वस्तुओं का अधिष्ठाता तथा मूल परमात्मा ही है। इस तरह के परमात्मा का योगिजन साक्षात्कार कर लेते हैं।

पुष्करपलाशवत् ब्रह्मवेत्ता पुण्यपाप कर्मभिर्नहि सम्बध्यत इत्याह

मू०-न साधुना नोत असाधुना वासमानमेतद् दृश्यते मानुषेषु।
समानमेतदमृतस्य विद्यादेवं युक्तो मधु तद्वै परीप्सेत्।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥२३॥

मर्मभेदिनी-ब्रह्मवेत्ता न तु साधुना कर्मणा=पुण्यकर्मणा, समानम्=उत्कृष्टो भवति, न वा असाधुना कर्मणा, असमानम्=अपकृष्टं भवति। ब्रह्मविदः कर्मफल-संबन्ध रहितत्वात्। पुण्यापुण्यकर्म समानमेव=समानरूपेणैव अमृतस्य ब्रह्मविदः कृते अकिञ्चित्कर भवतीति विद्यात्। एवं युक्तो=योगिनान् मधु=ब्रह्म

परीप्सेत = प्राप्तुमिच्छेत् । तं ब्रह्म योगिनः ध्यानयोगेन प्रपश्यन्ति ।

अनु०–ब्रह्मवेत्ता के लिए पुण्य एवं पाप कर्म बन्धन कारक नहीं होते । उस निष्काम कर्मयोगी के लिए दोनों प्रकार के कर्म समान रूप से अकिञ्चित्कर हैं । उसे सदा भोग्यतम ब्रह्म प्राप्ति की कामना करनी चाहिये । उस ब्रह्म का योगिजन ध्यान योग के द्वारा साक्षात्कार कर लेते हैं ।

चिन्ताविषादरहितो ब्रह्मवेत्ता ब्रह्मसाक्षात्कारद्वारभूतां विद्यां लभते

मू०–नास्यातिवादा हृदयं तापयन्ति नानधीतं नाहुतमग्निहोत्रम् ।
मनो ब्राह्मीं लघुतामादधीत प्रज्ञां चास्मै नाम धीरा लभन्ते ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥२४॥

मर्मभेदिनी–अतिवादाः = निन्दावचांसि, अस्य = ब्रह्मवेत्तुः हृदयं नहि तापयन्ति । न वा अनधीतान् वेदान् न वा अनहुतमग्निहोत्रम् प्रति सः शोचति । तस्य कृते तु साधनसप्तकानुगृहीतं मनः अस्मै = ब्रह्मविदे, ताम् = प्रसिद्धाम् ब्राह्मीं = ब्रह्मसम्बन्धिनीम् प्रज्ञां लघु = क्षिप्रम् आदधीत = करोति यां धीराः पुरुषाः = लभन्ते । तं च योगिनः परमात्मानं प्रपश्यन्ति ।

अनु०–ब्रह्मज्ञ अपनी निन्दा से दुखी नहीं होता, वह अननुष्ठित अग्निहोत्र तथा अनधीतवेद शाखा के लिए चिन्तित नहीं होता । उसका साधन सप्तक समन्वित मन उसके लिए ब्रह्म विद्या को शीघ्र ही प्रकाशित कर देता है जिसे धीर पुरुष प्राप्त कर परमात्मा का साक्षात्कार कर लेते हैं ।

मू०–एवं यः सर्वभूतेषु आत्मानमनुपश्यति ।
अन्यत्रान्यत्र युक्तेषु किं नु शोचेत् ततः परम् ॥२५॥

मर्मभेदिनी–एवमनेन प्रकारेण सर्वत्र वस्तुषु सर्वेषामात्मारूपेण परमात्मानमनुपश्यति सः ततः = परमात्मात्मकत्वात् परम् भिन्नम्,

अन्यत्रान्यत्र = पुत्रादारादौ युक्तेषु विषये, किं नु शोचेत् नहि किमपीत्यर्थः।

अनु०-सबों की आत्मारूप से परमात्मा को देखने वाला पुरुषः पुत्र दारादि में लगे जीवों के विषय में कभी नहीं सोचता।

वेदस्य सारतममेवार्थं गृहणाति योगी—

मू०-यथोदपाने महति सर्वतः सम्प्लुतोदके ।
एवं सर्वेषु वेदेषु आत्मानमनुजानतः ॥२६॥

मर्मभेदिनी-यथा = येन प्रकारेण, सर्वतः सम्प्लुतोदके = पानीय परिपूरिते महति = विशाले, उदपाने = कासारादौ, तृषतस्य यावता जलेन स्नानपानादिकस्य सिद्धिर्भवति तावन्मात्रमेव जलं सो गृह्णाति तथैव सर्वेषु वेदेषु आत्मानमनुजानतः-ध्यायिनः योगावाप्त्यनुकूलेनैव सरतमेनैवार्थेन प्रयोजनं भवति ।

अनु०-जिस तरह प्यासा व्यक्ति जल से परिपूर्ण सरोवर से प्यास बुझाने के लिए अभिलषित मात्रा में ही जल लेता है; उसी तरह योगी योगसिद्धि के अनुकूल सारतम अर्थ मात्र को ही सम्पूर्ण वेदों से ग्रहण करता है।

परमात्मानं मत्त्वा योगी प्रसन्नो भवति—

मू०-अंगुष्ठमात्रः पुरुषो महात्मा न दृश्यते सौहृदि संनिविष्टः ।
अजश्चरो दिवारात्रमतन्द्रितश्च, स तं मत्त्वा कविरास्ते प्रसन्नः ।२७

मर्मभेदिनी-अंगुष्ठमात्रः-हार्दाकाशे विद्यमानत्वादत्यल्पः महात्मा = जगतोऽपि महान् । इत्थमल्पीयस्त्वमहत्त्वाभ्यां परस्परविरुद्धाभ्यां गुणाभ्यां युक्तः 'श्रुतिरप्याह-'अणोरणीयान्महतो महीयान्' इति। पुरुषः = परमात्मा, सौहृदि = योग परिष्कृते हृदये सन्निविष्टः = प्रविष्टः अपि न दृश्यते = चक्षुरादीन्द्रियाणां गोचरो न भवति। सः परमात्मा अजः = अजन्मा, दिवारात्रम् सततं संचरणशीलः, अत एवातन्द्रितः = निरालस्यो वर्तते । तं = परमात्मानं मत्त्वा कविः =

क्रान्तद्रष्टा आत्मज्ञः, प्रसन्नः आस्ते = सर्वविधं कामक्रोधादिकं विहाय प्रसन्नो भवति ।

अनु०–अंगुष्ठपरिमाण वाला, व्यापक, अजन्मा, सततजागरुक सबों के अन्तर्यामी तथा चक्षु आदि इन्द्रियों के अविषय परमात्मा का मननकर योगी प्रसन्न हो जाता है।

इदानीं स्व परमात्मभावमनुभवन् परमात्मात्मकः सनत्सुजातः आत्मानं जगच्छरीरकमनुभवति—

मू०–अहमेव स्मृतो माता पिता पुत्रोऽस्म्यहं पुनः ।
आत्माहमपि सर्वस्य यच्चनास्ति यदस्ति च ॥२८॥
पितामहोऽस्मि स्थविरः पितापुत्रश्च भारत ।
ममैव यूयमात्मस्था न मे यूयं न वो वयम् ॥२९॥

मर्मभेदिनी–सर्वस्य जगतः परमात्मात्मकोऽहमेव माता, पिता पुत्रश्चास्मि, अहमेव सर्वस्य जगत आत्माऽस्मि, किञ्च अहमेव सर्वम् भूतं भव्यञ्च जगदस्मि। अहमेव स्थविरः = वृद्धः पितामहोऽस्मि, अहमेव पुत्रोऽपि पितापि च । यूयम् सर्वे ममैव आत्मस्था = मदधिष्ठानकाः स्थ । परमात्माधिष्ठानकत्वव्यतिरिक्तः अस्मत्सु कश्चनापि वास्तविकः संवन्धो नास्ति । इत्थमेव महर्षेर्वामदेवो ब्रह्मभावमनुबभूव। तथा च श्रुतिः–'तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे–अहमनुरभवं सूर्यश्च ।' इति ।

अनु०–मैं ही सम्पूर्ण जगत् का माता, पिता, पुत्र हुं। मैं ही सबों की आत्मा तथा अतीतानागत जगत् स्वरूप हूं । मैं ही किसी का पितामह, पिता और पुत्र होता हूं। मैं सबों का अधिष्ठान हूं। इस अधिष्ठानैकत्व को छोड़कर सांसारिक सभी संबन्ध अवास्तविक है।

किञ्च ।



मू०–आत्मैव स्थानं मम जन्म चात्मा, ओतप्रोतोऽहमजरप्रतिष्ठः ।

अजश्चरो दिवारात्रमतन्द्रितोऽहं, मां विज्ञायकविरास्ते प्रसन्नः ॥३०

मर्मभेदिनी–मम स्थानम्–अधिष्ठानं आत्मैव = परमात्मैव मम जन्महेतुरपि आत्मैव । इत्थम् परमात्मात्मकोऽहमेव सर्वस्मिन् कार्ये ओतप्रोतः = व्याप्तः । अहमेव जरादि विकार रहितः, जगतः प्रतिष्ठा स्वरूपश्च अजन्माहम् सर्वस्मिन् काले निरालसः सन् सर्वत्रचरामि । अतएव दिवारात्रमतन्द्रितश्चरः । मामेव = मदात्मभूतं परमात्मानं विज्ञाय = ध्यानयोगेन कविः = योगी प्रसन्नः आस्ते ।

अनु०–परमात्मा ही मेरा अधिष्ठान, तथा जन्म का हेतु है। परमात्मात्मक मैं ही सम्पूर्ण कार्यो में व्याप्त हूं तथा निर्दोष आधार हूं। मैं सदा सबों के भीतर संचरण करता हूं। मुझे ही जानकर योगी आनन्द मग्न हो जाते हैं।

इदानीमुपसंहरति दर्शनमिदम्—

मू०–अणोरणीयान् सुमनाः सर्वभूतेषु जाग्रति ।
पितरं सर्वभूतेषु पुष्करे निहितं विदुः ॥३१॥

मर्मभेदिनी–सर्वभूतेषु = चराचरेषु अणोरणीयान् = सर्वापेक्षया सूक्ष्मः सुमनाः = अखिलकल्याणगुणसागरः परमात्मा सर्वेषामन्तर्यामीरूपेण, आत्मनः सखित्वात्, आत्मनः संरक्षणाय जाग्रति = जागर्ति, शयोलुगार्षः गुणाभावश्च । सर्वभूतेषु देवमानुषतिर्यक्स्थावराख्येषु चतुर्विधेषु शरीरेषु, पुष्करे = हृदय कमले विद्यमानं सर्वस्य लोकस्य पितरं परमात्मानं विदुः ।

अनु०–सूक्ष्मतम, अखिलकल्याण गुणसागर परमात्मा सबो के अन्तर्यामीरूप से जाग रहा है। सम्पूर्ण जगत के पिता परमात्मा सबों के हृदय में स्थित है ॥३१॥

इति श्रीमहाभारते उद्योगपर्वणि सनत्सुजातपर्वणि पञ्चचत्वारिंशोऽध्यायः



( चतुर्थोऽध्यायः समाप्तः )

पञ्चचत्वारिंशत् तमोऽध्यायः
(आधुनिकैः प्रकाशकैः परित्यक्तः  नीलकण्ठाचार्यैर्व्याख्यातश्च)

सनत्सुजात उवाच

शोकः  क्रोधश्च लोभश्च  कामो  मानः  परासुता ।
ईर्ष्या मोहो विधित्सा च  कृपाऽसूया जुगुप्सुता ॥
द्वादशैते  महादोषा मनुष्यप्राणनाशनाः ।
एकैकमेते राजेन्द्र मनुष्यान् पर्युपासते ।
यैराविष्टो नरः पापं मूढसंज्ञो व्यवस्यति ॥ २
स्पृहयालुरुग्रः पुरुषो वा वदान्यः क्रोधं बिभ्रन् मनसा वै विकत्थी ।
नृशंसधर्माः षडिमे जना वै प्राप्याप्यर्थं नोत सभाजयन्ते ॥ ३
संभोगसंविद्विषमोऽतिमानी दत्त्वा विकत्थी कृपणो दुर्बलश्च ।
बहुप्रशंसी वनिताद्विट् सदैव सप्तैवोक्ताः पापशीला नृशंसाः ॥ ४
धर्मश्च सत्यं च तपो दमश्च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया ।
दानं श्रुतं चैव धृतिः क्षमा च महाव्रता द्वादश ब्राह्मणस्य ॥ ५
यो नैतेभ्यः प्रच्यवेद्द्वादशभ्यः सर्वामपीमां पृथिवीं स शिष्यात् ।
त्रिभिर्द्वाभ्यामेकतो वाऽर्थितो यो नास्य स्वमस्तीति च वेदितव्यम् ६
दमस्त्यागोऽथाप्रमाद, इत्येतेष्वमृतं  स्थितम् ।
एतानि ब्रह्ममुख्यानां ब्राह्मणानां मनीषिणाम् ॥७॥
सद्वाऽसद्वा परीवादो  ब्राह्मणस्य न शस्यते ।
नरकप्रतिष्ठास्ते वै स्युर्य एवं  कुर्वते  जनाः ॥८॥
मदोऽष्टादशदोषः स स्यात् पुरा योऽप्रकीर्तितः ।
लोकद्वेष्यं प्रातिकूल्यमभ्यसूया मृषा वचः ॥९॥

कामक्रोधौ पारतन्त्र्यं परिवादोऽथ पैशुनम् ।
अर्थहानिर्विवादश्च मात्सर्यं प्राणिपीडनम् ॥१०॥
ईर्ष्या मोदोऽतिवादश्च संज्ञानाशोऽभ्यसूयिता ।
तस्मात्प्राज्ञो न माद्येत सदा ह्येतद्विगर्हितम् ॥११॥
सौहृदे वै षड्गुणा वेदितव्याः प्रिये हृष्यन्त्यप्रिये च व्यथान्ते ।
स्यादात्मनः सुचिरं याचते यो ददात्ययाच्यमपि देयं खलु स्यात् ।
इष्टान् पुत्रान् विभवान् स्वांश्च दारानभ्यर्थितश्चार्हति शुद्धभावः ।१२
त्यक्तद्रव्यः संवसेन्नेह कामाद्भुङ्क्ते कर्म स्वाशिषं बाधते च ॥१३
द्रव्यवान् गुणवानेवं त्यागी भवति सात्त्विकः ।
पञ्च भूतानि पञ्चभ्यो निवर्तयति तादृशः ॥१४॥
एतत्समृद्धमप्यूर्ध्वं तपो भवति केवलम् ।
सत्त्वात् प्रच्यवमानानां सङ्कल्पेन समाहितम् ॥१५॥
यतो यज्ञाः प्रवर्धन्ते सत्यस्यैवावरोधनात् ।
मनसाऽन्यस्य भवति वाचाऽन्यस्याथ कर्मणा ॥१६
सङ्कल्पसिद्धं पुरुषमसङ्कल्पोऽधितिष्ठति ।
ब्राह्मणस्य विशेषेण किञ्चान्यदपि मे शृणु ॥१७
अध्यापयेन्महदेतद्यशस्यं वाचो विकाराः कवयो वदन्ति ।
अस्मिन् योगे सर्वमिदं प्रतिष्ठितं ये तद्विदुरमृतास्ते भवन्ति॥१८
न कर्मणा सुकृतेनैव राजन् सत्यं जयेज्जुहुयाद्वा यजेद्वा ।
नैतेन बालोऽमृत्युमभ्येति राजन् रतिं चासौ न लभत्यन्तकाले ॥१९

तूष्णीमेक उपासीत चेष्टेत मनसाऽपि न ।
तथा संस्तुतिनिन्दाभ्यां प्रीतिरोषौ विवर्जयेत् २०
अत्रैव तिष्ठन् क्षत्रिय ब्रह्माविशति पश्यति ।
वेदेषु चानुपूर्व्येण एतद्विद्वन् ब्रवीमि ते ॥२१

इति श्रीमहाभारते उद्योगपर्वणि सनत्सुजातपर्वणि पञ्चचत्वारिंशोऽध्यायः

## परिशिष्ट २

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य शास्त्रिपरीक्षायाम्‘सनत्सुजातीये’ प्रश्नाः

११७७ ई०

१ (क) कामानुसारी ........................ यत्किंचित्पुरुषो रजः ॥
(ख) तस्य सम्यक् ........................ वाह्यमाभ्यन्तरं जनम् ॥
(ग) एकैकमेते ........................ लुब्धकः ॥
(घ) विद्याद् बहुपठन्तं ........................ ब्राह्मणस्त्वया ॥
(ङ) शिष्यवृत्तिक्रमेणैव ........................ प्रथमः पाद उच्यते ॥
(च) एवं रूपो ........................ न रिष्यते ॥

२. ब्रह्मविद्या ब्रह्मचर्येणैव लभ्येति सनत्सुजातीयमधिकृत्य वर्ण्यताम् ।
ब्रह्मणो विश्वोपादानत्वं सनत्सुजातीयोक्तदिशा प्रतिपाद्यताम् ।

१९७८ ई०

१. (क) अभिध्या वै प्रथम ........................ तरन्ति मृत्युम् ॥
(ख) ऋचो यजूं ........................ न च लिप्यते ॥
(ग) आचार्याय ........................ पाद उच्यते ॥
(घ) अहमेवास्मि ........................ यदस्ति न ॥
(ङ) अस्मिल्लोके ........................ तावदेव तत् ॥

२. अप्रमादस्याष्टौ गुणाः के ? सनत्सुजातीयाधारेण निरूप्यताम् ।
भारतीय दर्शनज्ञानपर्यालोचना सनत्सुजातीयरीत्या प्रतिपाद्यताम् ।

(अथवा) केषाञ्चित् त्रयाणां व्याख्यानं कार्यम्—
(क) त्यागषट्कम् (ख) ब्रह्मचर्यमहत्त्वम् (ग) श्रेष्ठमुनेर्लक्षणम् ।
(घ) विद्यात्तां ब्रह्मणस्तनुम् ।

१९७९ ई०

१. (क) उभे सत्ये ........................ ब्रवीमि ॥
(ख) यतो न वेदा.................. विभाति राजन् ॥
(ग) एतेन ब्रह्मचर्येण ................ ब्रह्मचर्येण चाभवन् ॥
(घ) यथोदपाने .................. ब्राह्मणस्य विजानतः ॥
२. दमस्यदोषाः प्रदर्श्यन्ताम्, तपसः प्रशंसा फलं वा लिख्यताम् ।
सनत्सुजातीयप्रथमाध्यायस्य सारांशो विलिख्यताम् ।

१९८० ई०

१. (क) अभिध्यावे ................................ तरन्तिमृत्युम् ॥
(ख) न चेद्वेदा .............................. सनातनः ॥
(ग) विद्याद्बहु .......................... ब्राह्मणस्त्वया ॥
(घ) यथा नित्यं .............................. पाद उच्यते ॥
(ङ) पितामहोऽस्मि .......................... न चाप्यहम् ॥
२. मृत्युस्वरूपं ग्रन्थोक्तदिशा प्रतिपादनीयम् ।
सनत्सुजातीयतृतीयाध्यायस्य सारांशः संक्षेपेण निबन्धनीयः ॥

१९८१ ई०

१. (क) यमं त्वेके .................. शिवोऽशिवानाम्
(ख) तद्वै महामोहन .................. समस्तान् ॥
(ग) तस्यैव नामादि .................. मुदाहरन्ति ॥
(घ) यं यं वापि .................. तद्भावभावितः ॥
(ङ) इन्द्रियेभ्यः परा ......... महान् परः ॥
२. ब्रह्मणो विश्वोपादानत्वं सनत्सुजातीयोक्तदिशा विवेचयन्तु ॥
[illegible] सनत्सुजातीयदिशा विवेचयन्तु ॥

# परिशिष्टः–तृतीयः

## सनत्सुजातीयदर्शनरीत्या भारतीयदर्शनस्योपयोगिता

दुःखत्रयाभिघातस्यैकान्तिकापनोदनार्थमेव मुमुक्षुर्जीवो दर्शनेषु प्रवर्तते । दर्शनञ्च प्राप्यप्रापकविरोध्युपायफलानां स्वरूपयाथात्म्य-बोधनपूर्वकं संसारमूलमनाद्यविद्यारूपमज्ञानं नाशयति । अज्ञानना-शेनैव अनाद्यविद्याजन्यःपुण्यपापकर्मप्रवाहरूपः संसारो निवर्तते ।

सनत्सुजातीयदर्शनरीत्या– जननमरणरूपः संसार एव मृत्युशब्दवाच्यः । संसारादुद्विग्नो जीवः श्रोत्रियब्रह्मनिष्ठस्याचार्यस्य सविधे गत्वा, आत्मपरमात्मनोः स्वरूपं ज्ञात्वा, श्रुतस्यार्थस्य मननं कृत्वा, पुनः विवेकविमोकादिसाधनसप्तकानुगृहीतमनाः समाधावस्थाय स्वपरयोस्स्वरूप निदिध्यासनेन द्वाराऽपरोक्षीकृत्य समधिगतविद्यः सन्, विद्यामहिम्ना पूर्वोत्तराघयोरसंसृक्तो भवन्, अस्मिन् जन्मनि जन्मान्तरेवा प्रारब्धकर्मफलं भुक्त्वा, अर्चिरादिपथा उत्क्रम्य आवि-र्भूतगुणाष्टको मुक्तः, परमात्मनोऽतिशयं साम्यमवाप्नोति भोग-मात्रेण, अश्नुते च सर्वान् कामान् सह ब्रह्मणाविपश्चिता । इत्थं समग्रस्य भारतीयदर्शनस्य शाश्वतसुखस्यावाप्तये एव परमोपयोगिता ।

### ब्रह्मणोविश्वोपादानत्वम्—

उपादानत्वं नामावस्थाश्रयत्वम् । यथा–मृत्तिका घटस्योपा-दानम् । यद्द्रव्यं स्वपूर्वावस्थां विहाय कार्यरूपेण परिणमते, तदेव द्रव्यं तस्य कार्यस्योपादानम् । मृदेव स्वपिण्डत्वावस्थां विहाय घट-रूपेण परिणमते । एवमेव सृष्टेरादौ परमात्मा 'एकोऽहं बहुस्याम' इति सत्यसंकल्पं कृत्वा 'सच्च त्यच्चाऽभवत्' इति श्रुत्यनुसारेण प्रलयावस्थावस्थितां स्वशरीरभूतां नामरूपविभागानर्हां कारणा-वस्थां विहाय नामरूपविभागार्हावस्थारूपेण जगदात्मना स्वविशे-षणांशेन परिणमते । अतएवाह श्रुतिः 'सदेवसोम्येदमग्र आसीत्' इति । अस्यां श्रुतौ पुरोवस्थितं जगत् सृष्टेः प्राक् सद्रूपमेवासीत्

तदेव स्वविशेषणांशतः जगद्रूपेण प्ररिणतमभूत् इत्युक्तम् । अतएव ब्रह्मैव जगतः उपादानं सिद्धयति । आह च श्रुतिः– 'यतो वा इमानि भूतानि जायन्ते ।' इत्यादिकम् । भगवान् बादरायणोऽपि– 'जन्माद्यस्य यतः, 'शास्त्रयानित्वादित्यनयोः सूत्रयोः ब्रह्मणो जगदुपादानत्वम् प्रत्यपीपदत् । ब्रह्मण एव जगदुपादानत्व प्रतिपादितवान् आचार्यः सनत्सुजातोऽपि– सतश्चयोनिरसतश्चैक एव' इत्यस्मिञ्छ्लाके ।

## अप्रमादस्याष्टौगुणाः

षट्प्रकारकस्य त्यागस्य पालनेन योगी अप्रमादी भवतीत्याह– 'अप्रमादी भवत्येतैः सचाप्यष्टगुणो मतः ।' इत्यनेन श्लोकार्द्धेन महात्मा सनत्सुजातः । तस्यैतस्याप्रमादस्याष्टौ गुणा भवन्ति । ते च गुणास्सन्ति–

(१) सत्यम्– अमृषाभाषणम् । (२) ध्यानम्– तैलधारावदविच्छिन्नस्मृतिसन्तानेनद्वारा ध्येयस्य स्वरूपादिचिन्तनम् (३) समाधानम्-यत्रावस्थितो मुमुक्षः क्रमशो ध्येयं विशदविशदतरविशदतमतयान्ततो यथावदपरोक्षयति । तर्कः– अनन्ताक्षय्यफलवत्यां ब्रह्मविविदिषायामनेनैव प्रवर्तते मुमुक्षुः । वैराग्यम् = अनेनैव ऐहिकामुष्मिकफलभोगाद् विरागो भवति । ६–अस्तेयम् = अनेनैव परस्वापहरणाद्विमुखो भवति मुमुक्षुः । ब्रह्मचर्यम्– अष्टाङ्गमैथुनस्य त्यागः मैथुनस्याष्टावङ्गानि चाहुरभियुक्ताः–

स्मरणं कीर्तनं केलिर्वीक्षणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेवच ।
एतन्मैथुनमष्टाङ्ग प्रवदन्ति मनीषिणः ।

(८) असंग्रहः–पुत्रदारक्षेत्रादीनामपरिग्रहः । एतेषामेव गुणानां संग्रहं कुर्वन् प्राह–आचार्यः सनत्सुजातः–
सत्यं ध्यानं समाधानं चोद्यं वैराग्यमेव च ।
अस्तेयं ब्रह्मचर्यं च तथा ऽसङ्ग्रहमेव च ॥

## त्यागषट्कम्

मोक्षसाधनानामुद्देशं कुर्वन्नाचार्यस्सनत्सुजातः प्राह–'दमस्त्यागोऽप्रमादश्च, एतेष्वमृतमाहितम् ।' इति । मात्र साधनेष्वेतेषु त्यागः षट्प्रकारको भवति । तेच त्यागस्य षड्भेदा इमे सन्ति–(१)लक्ष्मीं विद्यां वाऽधिगम्याऽपि दर्पाभावः प्रथमस्त्यागः (२) रागं–द्वेषं च विहाय सुखयागाभ्यां विरक्तो भूत्वा केवल लोककल्याणाय इष्टापूर्तसम्पादनम् द्वितीयस्त्यागः । (३) कामत्यागस्तृतीयस्त्यागः । (४) निष्कामत्वञ्चतुर्थस्त्यागः । इद धनव्ययेन काम्यानांवस्तूनामुपभोगेनवाऽनावाप्यमास्ते । निष्कामः पुरुषः प्रयासस्यवैफल्यं गतेऽपि दुःखितोनहि भवति । (५) यत्त्यागी पुरुषः पुत्रान् दारानपि नहि याचते तत्तस्य पञ्चमस्त्यागः । (६) याग्याय याचकाय यत्सः सर्वं प्रदेयं ददाति तत्तस्य षष्ठस्त्यागः ।

एतेषां षण्णां त्यागानां वर्णन कुर्वन् प्राह चाचार्य. सनत्सुजातः–

श्रेयांस्तु षड्विधस्त्यागः, श्रियं प्राप्य न हृष्यति ।
इष्टापूर्ते द्वितीयं स्यात् नित्यवैराग्ययोगतः ।
कामत्यागश्च राजेन्द्र स तृतीय इति स्मृतः ॥
अप्यवाच्यं वदन्त्येतं स तृतीयोगुणः स्मृतः ।
त्यक्तेद्रव्यर्यद्भवति नोपयुक्तश्चकामतः ।
न च द्रव्यैस्तद्भवति नोपयुक्तश्चकामतः ॥
न च कर्मस्वसिद्धेषु दुःखं तेन च न ग्लेपेन् ॥
सर्वैरेवगुणैर्युक्तो द्रव्यवानपि यो भवेत् ।
अप्रिये च समुत्पन्ने व्यथां जातु न गच्छति ।
इष्टान् पुत्रांश्च दारांश्च न याचेत कदाचन ।
अर्हते याचमानाय प्रदेयं तच्छुभं भवेदिति ॥'

## ब्रह्मचर्यवर्णनम्

ब्राह्मीं विद्यामधिगन्तुं यदा मुमुक्षुः श्रोत्रियब्रह्मनिष्ठस्य गुरो-

रसमीपे अष्टविधमैथुनत्यागपुरस्सर मनसा, वाचा, कर्मणा चाचार्यस्य सेवां कुर्वन् निवसति तदेव ब्रह्मचर्यमिति प्रोच्यते। अनेनैव ब्रह्मचर्येण ब्रह्मविद्यां समुपलभ्यते इत्याह आचार्यः सनत्सुजातः 'विद्या सा हि ब्रह्मचर्येण लभ्या।' ब्रह्मविद्यैव पराविद्येति कथ्यते। अनयैव विद्यया मुक्तः संसाररूपं मृत्युं प्रणुद्य परमात्मनः प्राप्तिरूपं मोक्षमवाप्नोति। ब्रह्मचारिणः सुश्रुषया प्रसन्न आचार्यः यज्ज्ञानं प्रयच्छति ततस्य द्वितीयं जन्म। इदं जन्म पुण्यतममिति प्राह सनत्सुजातः-'अचार्यशास्ता या जातिः सापुण्या साजराऽमरा।' इदं ब्रह्मचर्यं चतुर्भिः पादैः समन्वितं भवति। ते च पादाः निम्नप्रकारकाः सन्ति- यच्छिष्यः शिष्यवृत्तिक्रमेणैव विद्यामाप्नोति। तद् ब्रह्मचर्यव्रतस्य प्रथमः पादः। मनसा, वाचा, कर्मणा, गुरोः प्रियाचरणमेव ब्रह्मचर्यस्य द्वितीयःपादः। अस्मिन् क्रमे शिष्यः गुरुपुत्रं प्रति गुरुपत्नीं प्रति चतेनैव प्रकारेण श्रद्धापूर्वकं व्यवहरति यथा सः गुरुं प्रति ससम्मानं व्यवहरति : आचार्यस्य विद्याप्रदानरूपमुपकारं तेन च स्वीय लौकिकमभ्युदयं संस्मृत्य शिष्येण आचार्यस्य सम्मानककरणमेव तस्यब्रह्मचर्यव्रतस्य तृतीयः पादः। आचार्यायोचितां दक्षिणांदत्वा शिष्यः ताम् कदापि कुत्रापि यन्नाह वक्ति ततस्य ब्रह्मचर्य व्रतस्य चतुर्थः पादः।

अनेन चतुस्पादेन ब्रह्मचर्यव्रतेन शिष्यः चतुस्पादीं ब्रह्मविद्यामधिगम्य तस्या एव महिम्ना मोक्षमन्तेऽधिगच्छति। एवं प्रकारकाय शिष्याय सर्वो हि लोकः कामदुघो भवति। ब्रह्मचर्यमहिम्नैव सूर्यः जगत् प्रकाशयति, देवा अमृता अभूवन्, ऋषयः ब्रह्मलोकमध्यगुः। आहापिसनत्सुजातो ब्रह्मचर्यस्य महत्त्वम्-'य आश्रयेत्पावयेच्चापि राजन् सर्वं शरीरं तपसा तप्यमानः। एतेन वै बाल्यमभ्येति विद्वान् मृत्युं तथा स जयत्यन्तकाले।' इति।